

# श्रेष्ठी देवचन्द लालभाई जव्हेरी.

जन्म १९०९ वैक्रमाब्दे
कार्तिकशुक्लैकादश्यां, सूर्यपूरे.

निर्याणम् १९६२ वैक्रमाब्दे
पौषकृष्णतृतीयायाम्, मुम्बय्याम्.

**The Late Sheth Devchand Lalbhai Javeri.**

Born 1853 A. D. Surat,

Died 13th January 1906 A D Bombay.

9-21-Copies 5000.

# श्रीनवपदलघुवृत्तेर्विषयानुक्रम.

आद्यायां गाथायां मङ्गलाभिधेयादि, द्वितीयायां याद्दशादीनि नव द्वाराणि, तृतीयादितः सप्तत्रिंशदधिकं शतं यावद्गाथानां मिथ्यात्वसम्यक्त्वद्वादशव्रतसंलेखनारूपेषु पञ्चदशसु स्थानेषु नवभिर्नवभिर्याद्दशादिभिर्द्वारैः सकथानकस्वरूपं, सूचा चैवमत्र—

| गाथाः | | याद्दशं १ | यतिभेदं २ | यथोत्पत्तिः ३ | दोषे ४ | गुणेः ५ | यतनायां ६ | अतीचारेषु ७ | भंगे ८ | भावनायां ९ |
|---|---|---|---|---|---|---|---|---|---|---|
| ३—११ | मिथ्यात्वे | | | | नन्दमणिकारः त्रिविक्रमभट्टः | इन्दनागः | अंम्मडशिष्याः | शिवराजर्षिः मुद्गलः | शिवजन्म | तामलिः |
| १२—२० | सम्यक्त्वे | | | | | धनसार्थवाहः | | | | कार्तिकः |
| २१—२९ | प्राणातिपात-विरतौ | | | | द्रमकः पतिमारिका | दामन्नकः सूपकारश्रावकः क्षेमादि | | | | |

| | | | | | |
|---|---|---|---|---|---|
| ९९ – १०१ | सामायिके | | कण्डरीकः | सागरचन्द्रः<br>सुदर्शनः | |
| १०२ – ११० | देशावकाशके | | | कामदेवः | |
| १११ – ११९ | पौषधे | | | आनन्दः | |
| १२० – १२८ | अतिथिसंविभागे | कुरङ्गः<br>जीर्णश्रेष्ठी | नागश्रीः | कृतपुण्यः<br>शालिभद्रः | श्रेयांसः |
| १२९ – १३७ | संलेखनायां | | पंडरागां<br>संभूतिः | महाशतकः<br>मंडूकः | स्कन्दकः |

## ॥ ( लघुवृत्तियुत ) श्रीनवपदप्रकरणस्योपोद्घातः ॥

॥ ॐ नमः सर्वज्ञाय ॥

शेमुषीधनाः ! स्वीक्रियतामिदमुपदीक्रियमाणं ग्रन्थरत्नं, ग्रन्थेषु उत्कृष्टता चास्य पाठकश्रावकाणां प्रस्तुतग्रन्थावलोकनात् स्पष्टीभविष्यति तदत्र न किञ्चिद् वर्ण्यते, नहि हस्तकङ्कणदर्शने आदर्शस्योपयोगः क्वापि, तथापि रत्नस्य केवलस्य न तादृशी शोभा उपयोगो वा तादृक् यादृशी शोभा उपयोगश्च सकाञ्चनस्य जगति भवति, तत एव हेतोः काञ्चनसमाना प्रस्तावना निबध्यते ॥

अत्र चिन्तनीयमेतत् यदुत किमस्याभिधानं १ को वा विषयः २ कश्च मूलकर्त्ता ३ कश्च विवरीता ४ कश्च गच्छोऽस्य ५ किमर्थं ६ कदा कृतं चेति ७। तत्र प्रथमं तावत् अभिधानमस्य 'नवपदप्रकरण'मिति, यद्यपि नवपदशब्देन रूढ्या श्रीमन्ति अर्हदादीनि तपोऽन्तानि नवपदानि प्रतीयन्ते, तेषां च व्याख्यानमत्र केनापि प्रकारेण भविष्यति इति स्यादाशङ्का, परं तान्युपयोगीन्यपि आराध्यतमान्यपि च नात्र विवरीतुमिष्टानि, अत्र तु श्रीमत्यामावश्यकचूर्णौ देशविरतिप्रकरणे "जारिसओ जइभेओ" इत्यादिपूर्वान्तर्गतगाथया यानि अनुव्रतविषयतया नव पदानि प्रतिपादितानि तान्येव विवृतानि इति सार्थकाऽभिधा अस्य ग्रन्थरत्नस्य नवपदप्रकरणमिति, न च वाच्यं सङ्ख्यापूर्वत्वात् नवपदीप्रकरणमिति भाव्यं, यथा पञ्चलिङ्गी पञ्चाध्यायीति, अत्र त्रिपदबहुव्रीहेरभ्युपगमाद्, यद्वा नव पदानि अस्मिन् इति बहुव्रीहेरभ्युपगमात्, समाहारस्य द्विगोश्चात्र विवक्षैव नास्ति. पञ्चमङ्गलं पञ्चमङ्गलमहाश्रुतस्कन्धः षट्स्थानकम् इत्यादिवत् नात्र दोषलेशः, प्रकरणता चास्य श्रावकधर्म्मविधेरपेक्षया, न तु अन्यस्य

कस्यापि हृन्तं ग्रन्थमपेक्ष्य, यतः–श्रावकप्रज्ञप्त्यादयो ग्रन्थरत्नानि यद्यपि श्रावकधर्म्मप्रतिपादकानि प्रत्नसूरिवर्यैः रचितानि अभूवन् परं न तदवताराय एतत् प्रकरणमिति १।

विषयश्च प्रस्तुतग्रन्थरत्नस्य मिथ्यात्व–सम्यक्त्व–द्वादशव्रत–संलेखनारूपेषु पञ्चदशसु स्थानेषु पूर्वगाथोदितानि यादृशं १ गतिभेदं, २ यथा जायते ३ अत्र दोषाः ४ गुणाः ५ अतिचाराः ६ भङ्गः ७ यतना ८ भावना ९ इतिरूपाणि नव द्वाराणि विवेचितानि, ततश्च नैतद्ग्रन्थरत्नप्रतिपादितविषयस्य कल्पनाशिल्पिनिर्मितत्वं, गाथाश्चात्र सप्तत्रिंशदधिकशतमानाः, प्रथमा गाथा मङ्गलाभिधायिनी द्वितीया नवपद्या उद्देशका शेषं तु पञ्चत्रिंशदधिकं गाथाशतं पूर्वोक्तेषु पञ्चदशसु विषयेषु नवनवद्वारनिरूपकं, तथा च पञ्चदशानां नवभिर्गुणने द्वयोश्च पूर्वोक्तगाथयोः प्रक्षेपे स्यादेव ग्रन्थमानमिति । यद्यप्यस्य बृहद्वृत्तिः पूज्यप्रपौत्रेण श्रीयशोदेवोपाध्यायेन निर्मिता, तत्र च ग्रन्थकृन्नामगर्भा अधिका गाथा पुस्तके दृष्टेतिकृत्वा विवृता, परं नात्र पूज्यैः सा गाथा धृता न वा विवृतेतिकृत्वा सा न गण्यते, अत्रत्यासु गाथासु अनेकगाथा आवश्यकचूर्णिगता विद्यन्ते, ताश्चैताः

१ " नारिसओ जइभेओ " २ " उचियं मोत्तूण कलं " ३ " वज्जेज्जा मोहकरं " " णमो ते सिर " ४ "सतोसं गहिय भावि " ५, ६ " जह जह अप्पो लोभो " ७ " धम्मोऽपरिग्गहं" ८ " तत्तायगोलकप्पो " ९ " जत्थत्थि सत्तपीला " १० " नमो सदा " ११ " भोगुवभोगे जण " १२ " पुप्फेहि फलेहि विरसेहि " "जत्थत्थि० उवभोगं" १३ " सव्वेसिं साहूणं" १४ " अट्ठेण तं न बंधइ " १६ " खेत्ताइ कसइ गोणा " १७ " तेसिं० आसत्थगाई " १८ " धम्मज्झाणोवगओ " १९ " धण्णा जीवेसु दयं " २० " कइया णु अहं दिक्खं " २१

इत्याद्या अनेका आवश्यकचूर्णिगता गाथाः काश्चित् तथास्थिता एव काश्चिच्च भावार्थ। दिरूपा एव धृता अत्र इति नात्रस्यो विषयो नूतनः, परं सौकर्यं तु यादृगत्र मतिविषयं न तथा आवश्यकचूर्णाविति महत्युपयोगिताऽस्य २। विवरीतारश्चास्य ग्रन्थरत्नस्य श्रीमन्तो देवगुप्ताचार्याः, एभिरेव पूज्यैः नवतत्त्वप्रकरणमपि कृतं, परं तत् गण्यवस्थायां जिनचन्द्राभिधानं दधा।, गणित्वं च पाणमासिकभगवत्यङ्गोपधानोद्वहनेनेति नवतत्त्वटीकायां पूज्यप्रपौत्रेणैवोक्तमिति साम्प्रतीनाः कमलगच्छीया दूरापास्त-प्रसरा एव, अस्तु, तैरेव पूज्यैरवाप्तसूरिपदैः एतत्प्रकरणं उद्धृतं तद्वृत्तिश्च कृता, अत एवात्र प्रशस्तौ—

" एतट्टीका प्रोक्ता श्रावकानन्दकारिणी नाम्ना। श्रीदेवगुप्तसूरिभिः वाचयितव्या प्रयत्नेन ॥८॥ श्रावकानन्दटीकेयं नव-पदस्य [ प्र ] कीर्तिताः। जिनचन्द्र ( पूर्व ) नाम्ना गच्छे ओकेशसंज्ञिते ॥ ११ ॥ " इति श्लोकद्वयेन जिनचन्द्रेत्यभिधा देव-सूरिरित्यभिधा च सङ्घटते; ककसूरिशिष्यत्वं तु श्रीमतां नवतत्त्वप्रकरणे स्फुटमेव, किञ्च—अत्र प्रकरणविधौ श्रीमतां ककसूरीणां शिष्याः श्रीमन्तः कुलचन्द्रा एव सूचका इत्यपि—

" ककाचार्यशिष्येण कुलचन्द्रसंज्ञितेनैषा सूचिता टीका " इति प्रशस्तिलेखत एवावबुध्यते, तथा च स्वगुरुभ्रातृकुलचन्द्र-सूचनया प्रकरणस्यास्य टीका विदधे इति स्पष्टं ज्ञायते।

स्वोपज्ञविरणान्वितत्वात् न मूलविवरणयोः कर्तृभेदः। स्वकृतविवरणान्वितत्वं चास्य यद्यपि नानेन ग्रन्थेन प्रतिपाद्यते, तथापि बृहद्वृत्तौ .... .... " वृत्तिर्यद्यपि विद्यतेऽत्र विहिता तैरेव पूज्यैः स्वयं, संक्षेपेण तथापि सात्र सुगमा गम्भीरशब्दा यतः " इति वचनेन तथा तद्विवृतिगतैरन्यैरपि च तथाविधवचनैर्हेतुभिरस्याः स्वोपज्ञत्वं निर्णीयते ३–४।

पूज्यपादानां गच्छस्तावत् 'उपकेश' (ओकेश) इति स्वयमेव प्रशस्तौ प्रतिपादितवन्तः, श्रीमत्प्रपौत्रा अपि नवपदबृहद्वृत्तौ नवतत्त्ववृत्तौ च प्रकटयन्ति—

'प्रशनिधिरिवास्ति गच्छः श्रीमानुकेशपुरनिसृतः,' तथा च पूज्यानां उकेशगच्छान्तर्गतता सिद्धैव, ये केचिदाधुनिकाः तं गच्छं तान् पूज्यांश्च पार्श्वनाथशासनान्तर्वर्त्तितया मन्वते तद् अलिकमिति एतावदेव न, किन्तु प्रकरणकारानभिमतमेव, यतः श्रीपूज्यैरेव अत्रैव ग्रन्थरत्ने—

"वर्तमानतीर्थाधिपतिं वीरनाथं इत्यर्थः," इति वचनेन स्वेषां वीरतीर्थान्तर्वर्तित्वं सूचितं, न च क्वापि सूत्रे प्रकरणे वा श्रीपार्श्वप्रभोः शासनं सार्धद्विशवर्षेभ्योऽधिकं प्रवृत्तमित्युपलभ्यते, प्रस्तुतग्रन्थरत्नं च नैव श्रीपार्श्वप्रभुशासनान्तर्गत-श्रुताधारेण, किन्तु वर्तमानतीर्थान्तर्गतशास्त्राधारेणैव, अत एव च ६ पत्रे विस्तरार्थस्तु उत्तराध्ययनादवसेयः ७ विस्तरार्थस्तु-आवश्यकविवरणादसेयः ९ वित्थरेण विवाहपन्नत्तीए एक्कारसमे सए ९ विस्तरार्थस्तु भगवत्याः ११ विस्तरेण भगवत्यां, यथा प्रज्ञापनोपाङ्गे १६ विशेषस्तु ऋषभचरित्रादवसेयः १८ कथानकं ज्ञाताधर्मकथासु ५२ पद्मचरित्रे विस्तरः ६० कथानकं हरिवंश-कथायां ७ विस्तरो वसुदेवहिण्डयाम्। ४० गाथाविवरणे विस्तरतो भगवत्यां ४९ कथानकं सविस्तरमुपासकदशाङ्गे, नायाध-म्मकहाओ, ५३ विस्तरेण उपदेशमालायां ५६, एभिः वाक्यैः स्पष्टमेव पूज्या वर्तमानतीर्थशास्त्राश्रिता इति ज्ञायते, किञ्च यदि पूज्याः पार्श्वनाथतीर्थे समाश्रिता अभविष्यन् तर्हि श्रीमन्महावीरवर्णने भगवान् चातुर्मासिकाभिग्रहेण इति (९१) गाथावृत्तौ कथानके तथा स्कन्दककथानके भगवत्समीपमागतः इति निर्विशेष्यं नैवाकथयिष्यन्, नैव च प्ररूपयिष्यन् श्रीपार्श्व-

प्रभूणां अधिकारे पण्डुरायकथानके " पासस्स समवसरणे " इति, तथा च स्पष्टतया विवेकिनां प्रतिभासिष्यते यदुत ऊकेश-पुरनगमादेव ऊकेशगच्छ इत्यभिधा, न च तथाभिधाने असम्भवि, यतः नानकगच्छः, कोरण्टकगच्छः, ब्रह्माणगच्छः सण्डेरक-गच्छः इत्यादयः नैके गच्छाः ग्रामनामधारका इति। अनुवदन्ते च श्रीयशोदेवोपाध्याया अपि एतदेव नवपदबृहद्वृत्तौ नवतत्त्व-वृत्तौ च। यच्च साम्प्रतीनैः केशिकुमारपारम्पर्यमुद्घुष्यते तदपि आलजालकल्पमेव, यतः श्रीमद्भिः केशिकुमारैः श्रीवर्धमानशासने सङ्क्रमणं कृतमिति श्रीमदुत्तराध्ययनेषु केशिगौतमीयाध्ययने स्पष्टमेव, तथा च तत्पाठः—" पञ्चमहव्वयधम्मं, पडिवज्जेइ भावओ। पुरिमस्स पच्छिमंमि, मग्गे तत्थ सुहावहे ११।" एतावत्यपि जागर्त्ति प्रमाणवृन्दे यद्वा तद्वा वदनं कलिकालमाहात्म्यजमेव ज्ञेयम्। एतेन श्रीमतां रत्नप्रभसूरीणां चतुर्दशपूर्वित्वप्रवादोऽपि निर्मूल एव, यतः श्रीमतां केशिप्रभूणां वीरशासने सङ्क्रमः, श्री-वीरशासने च श्रुतकेवलिनः षडेव, अत एव च राजप्रश्नीयेऽपि महाव्रतचतुष्कप्ररूपणा सङ्गच्छते, तदानीमसङ्क्रमात्। अत एव च पूज्यपादविहितस्य प्रस्तुतग्रन्थरत्नस्य प्रामाणिकता शासनधुरन्धरैः स्वीकृता तदनुसारेण च प्ररूपणापि दृढीकृता, यतोऽवलोक्यते श्रीमत्यामुपाशकदशाङ्गवृत्तौ " नवपदप्रकरणादिषु तथादर्शनात् ' इति वाक्येन एतद्बलेनैव अतीचारभङ्गयोः पार्थक्यं श्रीमद्भिः अभयदेवसूरिभिः प्रदर्शितम्। अतो ये हि केचित् खराः ऊकेशगच्छीयान् अपवदन्ति श्रीमतोऽभयदेवसूरींश्च अस्वकीयानपि महिमार्थं बहु मन्वते ते ग्रथिलपरिधानन्यायमनुसरन्तो दृश्याः. यतः,—श्रीमन्तोऽभयदेवसूरयः ऊकेशगच्छीयान् पूज्यपादान् प्रमा-णीकुर्वन्ति, नैतावन्मात्रमेव, किन्तु पूज्यपादविहितस्य नवतत्त्वप्रकरणस्योपरि भाष्यं वितन्वन्तः श्रीमंतः तद्गच्छसूरीन् पूर्वसूरितया निर्दिशन्ति, तथा च—श्रीमतां पूज्यपादानां द्वयेषां न कोऽपि विरोधः परस्परमविश्रम्भो वा, परं पाश्चात्याः खरा मृषावादनिरताः

यं कश्चन प्रसिद्ध्यर्थं पूर्वत्र मन्वानाः परगच्छद्वेषिणो यद्वा तद्वा प्रलपन्ति इत्यलमतिचर्च्चया, परं गच्छोऽयमूकवसंश्रितः न सिद्धान्तविरोधभाग् न च अनाप्तपुरुषमूल इति सुधिया पूर्वोक्तेनाभ्यूह्यमिति ॥

प्रस्तुतप्रकरणकरणं सम्यक्त्वादिविषयज्ञानमेप्सूनां विस्तृततरगनवतया महोपकार्येव, यद्यपि श्रीमद्भिर्हरिभद्रसूरिवर्यैः पञ्चाशके श्रावकप्रज्ञप्तौ आवश्यकविवरणे च श्रावकधर्म्मस्य विविधरूपतया प्रतिपादितत्वात् विशेषेण नोपयोगोऽस्य तथापि तदानींतनकाले दुष्षमादोषप्रादुर्भूतपौर्णमीयकमतमूलानकर्त्तनाय प्रौढिमारूढाया आवश्यकचूर्णौ धृतायाः पूर्वान्तर्गतगाथायाः प्राबल्यं वीक्ष्य सम्यक्त्वादिषु सर्वत्र तत्प्रदर्शनार्थमयं ग्रन्थः । यतः पञ्चाशदधिक सहस्रे वैक्रमीये वर्षाणामतिक्रमे जैनशासनाद् बहिर्भूताः पौर्णमीयकाः प्ररूपणां चक्रुः, यदुत न श्रावकैः प्रतिक्रमणं कार्यम्, समाहितं च स्वकल्पनया तैः श्रीअनुयोगद्वारोदिष्टं समणेण सावएण य अवस्स कायव्वयं हवइ जम्हा । अंतो अहोनिसस्स य तम्हा आवस्सयं नाम ॥ १ ” गाथासूत्रं चैत्यवन्दनादीनां आवश्यकताऽविर्भावेन, अत एव च श्रीमद्भिरभयदेवसूरिभिरपि प्रथमपञ्चाशकवृत्तौ श्रावकाणां षडावश्यकप्रयप्रतिक्रमणव्यवस्थापनार्थमुपचक्रमे, तथा च तत्पाठः,–“ षड्विधावश्यकमवश्य विधेयमिति सर्वत्र गम्यम्, चशब्दः समुच्चये, नन्वावश्यककरणमित्यसङ्गतं, श्रावकं प्रति व्रतादिवत्तस्यागमे विधेयतयाऽनुपदिष्टत्वात्, तथाहि–अस्योपासकदशादौ मूलागमे नोपदेशा ज्ञापकं चा (वा) पलभ्यते, तदुद्धाररूपे श्रावकप्रज्ञप्त्यादौ च । तथेहच भावकप्रतिदिनक्रियां प्रतिपादयताऽऽचार्येण 'चइवंदणमो' इत्येतावदेवोक्तं, अथ ब्रूषे–“समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा । अंतो अहोनिसस्स य तम्हा आवस्सयं नाम ॥ १ ॥ ” इत्यस्यामनुयोगद्वारगाथायां श्रावकस्य तदुपदिष्टमित्य-

सिद्धो हेतुः, नैवम्, तत्र चैत्यवन्दनादितैरावश्यकतार्थत्वात्, यतो यदेवावश्यं कर्त्तव्यं तदेवावश्यकम्, अवश्यकर्त्तव्यं च चैत्यपूजावन्दनादि, यदि पुनरिदं षड्विधावश्यकमवश्यकर्तव्यतया श्रावकस्योपदिष्टमभविष्यत्तदा य एव षड्विधावश्यककारी स एव श्रावकोऽभविष्यत्, न चैवम्, अविरतानामपि सामायिकाकारिणां श्रावकत्वाभ्युपगमात्, अत्रोच्यते—यदुक्तमुपासकदशादावनुक्तत्वाच्छ्रावकाणामावश्यकमयुक्तमिति तदयुक्तं, अनुपदिष्टत्वस्यासिद्धत्वात्, तथाहि—यद्यप्युपासकदशादौ नोपदिष्टं तत्तेषां, तथाप्यनुयोगद्वारेषु तदुपदिष्टं, तथाहि—“ जं इमं समणे वा समणी वा सावए वा साविया वा तच्चित्ते तम्मणे जाव उभओ कालं छव्विहं आवस्सयं करेंति से तं लोकोत्तरियं भावावस्सयं ” ति, यच्चोक्तं—चैत्यवन्दनादि श्रावकस्यावश्यकमिति तदप्यसङ्गतम्, “ अज्झयण छक्कवग्गो ” इत्यादि तदेकार्थिकपदोपन्यासेन तस्य षड्विधत्वेन निश्चितत्वात्। उमास्वातिवाचकेनाप्यस्य समर्थितत्वात्, तथाहि तेनोक्तं—“ सम्यग्दर्शनसम्पन्नः षड्विधावश्यकनिरतश्च श्रावको भवती ” ति गम्यते। ” इत्यनेन श्रावकाणां प्रतिक्रमणकर्तव्यता निर्णीता। तथैव पौर्णिमीयकादीनां प्रलापोऽपरोऽप्यभूत् यदुत देशविरतेः सूक्ष्मत्वात् तत्र न देशभङ्गरूपातिचारसम्भवः, नहि कुन्थुशरीरे क्षतमिति, तदपाकृतये अत्रैव प्रथमपञ्चाशके श्रीमद्भिः प्रयतितं, तथैव श्रीमदुपासकदशानां वृत्तावपि देशविरतावप्यतिचारसम्भवस्य प्रतिपादनं कृतं, तथा च तत्पाठः—“ असाभिरतिचारा व्याख्याताः सम्प्रदायात्, नवपदादिषु तथा दर्शनात्, “जारिसओ जइभेओ जह जायइ जहेव तत्थ दोसगुणा। जयणा जह अइयारा भंगा तह भावणा नेया ॥ १ ॥ ” इत्यस्या आवश्यकचूर्ण्यां पूर्वगतगाथाया दर्शनात्, अतिचारशब्दस्य सर्वभङ्गे मायाऽप्रसिद्धत्वाच .... .... ....

१. पृष्ठ ११८२.

अन्यथा सम्यक्त्वातिचारेषु दैशिकेषु प्रायश्चित्ततप एव निरूपितं, सार्विकेषु तु मूलमिति .... .... .... किञ्च प्रागुपदर्शितायाः 'जारिसओ' इत्यादिगाथायाः सामर्थ्यादेवातिचारभङ्गो देशविरतिसम्यक्त्वयोः प्रतिपत्तव्याविति," अनेन स्पष्टीभूतमेतद् यदुत श्रावकाणामवश्यं आवश्यकं करणीयं, तन्मूलं चातिचाराणां सम्भवः, तस्य सिद्धिश्च मुख्यतया "जारिसओ जइभेओ" इत्या गा- वश्यकचूर्णिगाथयाऽऽह, तत एव च सा तदानीं प्रसिद्धतराऽभूद् गाथा, एनामेव चाश्रित्य कृतोऽयं ग्रन्थः, तथा च सम्यक्त्वादेश सर्वेषु श्रावकाणामतिचारसम्भवः इत्यस्य सिद्ध्यर्थमपि एष पूज्यपादानां प्रयासः ६ ।

पूज्यपादाश्च वैक्रमीयैकादशशत्यां सत्तावन्त इत्यत्र तु प्रस्तुतग्रन्थप्रशस्तिगतं, " त्रिसप्ततौ सहस्रे " इति वाक्यं निर्णायकं । श्रीमद्भिश्च कृता ग्रन्थाः विशेषेण नोपलभ्यन्ते, तत्र कालदोषमेव कारणतया मन्यामहे, श्रीमतां तत्रभवतां कृतेषु नवतत्त्वप्रकरणं मूलमात्रं सवृत्तिकं चैतत् नवपदप्रकरणं इत्येतद् युग्मं उपलभ्यते, परं श्रीमद्भिर्विहितः अनुव्रतविधिः भगिनीवत्सलश्च अत्रैव ग्रन्थे अतिदेशतया प्रतिपादितौ, परं न क्वाप्युपलभ्येते, एवं अज्ञाता अपि केचन भविष्यन्ति, परं तत्र तद्विद एव प्रमाणमिति शम् ।

श्रीमता पार्श्वनाथेन, पूते सादरिनामनि । पुरे स्थितेन यस्नाऽयं, चतुर्मासो कृतो मुदा ॥ १ ॥

वह्नि ३ वस्व ८ ङ्क ९ चन्द्राऽब्दे १, ऊर्जे मासि सिते शनौ । तृतीयायां लिखितवानाः । नन्दः पार्श्व सेवकः ॥२॥ इति

श्रेष्ठिदेवचन्द्रलालभाईजैनपुस्तकोद्धारग्रन्थाङ्के,—

श्रीमद् देवगुप्तसूरिप्रणीतं स्वोपज्ञवृत्तियुतम्

# श्रीनवपदप्रकरणम्.

नत्वेच्छायोगतोऽयोगं, योगिगम्यं जिनेश्वरम् । नवभेदव्रतव्याख्यां, मत्यात्मस्मृतये यते ॥ १ ॥

**नमिऊण वद्धमाणं मिच्छं सम्मं वयाइं संलेहा । नवभेयाइं वोच्छं सड्ढाणमणुग्गहट्ठाए ॥ १ ॥**

'नत्वा' प्रणम्य 'वद्धमाणं' वर्द्धमानस्वामिनं, वर्त्तमानतीर्थाधिपतिं वीरनाथमित्यर्थः, 'मिच्छं' ति मिथ्यात्वमदेवादौ देवत्वादिबुद्धिरूपं विपरीतदर्शनं, 'संमं' ति सम्यग्दर्शनं जीवादिपदार्थश्रद्धानरूपं 'वयाइं' ति अणुव्रतगुणव्रतशिक्षापदव्रत [श्रावकधर्मद्वादशव्रत] रूपाणि 'संलेह' त्ति संलेखना-मरणकालभाविनी क्रिया, 'नवभेयाइं' ति 'जारिसओ' इत्यादिगाथोक्तानि 'वोच्छं' वक्ष्ये अभिधास्ये 'सड्ढाणं' ति भावश्रावकाणां, सम्यग्दर्शनषट्स्थानसम्पन्नानामित्यर्थः, 'अणुग्गहट्ठाए' त्ति अनुग्रहार्थमिति, विशिष्टशुभाध्यवसायजननेनोत्कृष्टफलजननार्थमिति गाथासंक्षेपार्थः ॥ १ ॥

प्रेक्षावतां प्रवृत्त्यर्थं, फलादित्रितयं स्फुटम् । मंगलं चैव शास्त्रादौ, वाच्यमिष्टार्थसिद्धये ॥ १ ॥ फलं-प्रयोजनं अनंतरं परंपरं

कर्तुः श्रोतुश्च, अभिधेयं—अणुव्रतादि, सम्बन्ध उपायोपेयलक्षणः वाच्यवाचकलक्षणश्च, मंगलं नत्वा जिनमिति। अनया गाथया मंगलादिवाच्यं यथायोगमित्यर्थः ॥ नव भेदानुच्चारयन्नाह—

**जारिसओ जइभेओ जह जायइ जह व एत्थ दोस गुणा। जयणा जह अइयारा भंगो तह भावणा नेया॥२॥**

'जारिसओ' त्ति यादृग्भूतानि मिथ्यात्वादीनि भवन्ति तद्वक्ष्ये स्वरूपकथनद्वारेण तथा 'जइभेओ' त्ति तेषामेव मिथ्यात्वसम्यग्दर्शनादीनां भेदप्रतिपादनं द्वितीयं द्वारं, तथा 'जह जायइ' त्ति यथा जायते—यथा सम्यक्त्वाद्युत्पत्तिर्भवतीति तृतीयं द्वारं, 'जह व एत्थ दोस' त्ति यथा अगृह्यमाणेषु सम्यग्दर्शनादिषु ये दोषास्तच्च वक्तव्यमिति चतुर्थो भेदः, 'गुण'-त्ति गृह्यमाणेष्वणुव्रतादिषु ये गुणा भवन्ति, तच्च भणनीयमिति पञ्चमो भेदः, 'जयण' त्ति अणुव्रतादीनामेव गुरुलाघवादि-विचारणालक्षणा यतना, सा प्रतिपादनीया इति षष्ठो भेदः, तथा 'जह अइयार' त्ति अतिचाराः सम्यक्त्वाणुव्रतादीनामेव अतिचरणरूपाः तृतीयस्थानवर्त्तिनः खण्डनकारिणः परिणामविशेषाः इति सप्तमः प्रकारः, 'भंग' त्ति तेषामेव पञ्चदश-स्थानानां चतुर्थस्थानवर्त्यनाचाररूपो भङ्गः अष्टमस्थानं, 'तह भावणा नेया' तथा भावना आत्मगुणाधिके बहुमानस्तुति-गुणरूपा, प्रत्यणुव्रतमिति भावना, इति गाथार्थः ॥ २ ॥ साम्प्रतं मिथ्यात्वं नवभेदं यदुपन्यस्तं तदाद्यद्वाराभिधित्सयाह—

**देवो धम्मो मग्गो साहू तत्ताणि चेव सम्मत्तं। तव्विवरीयं मिच्छत्तदंसणं देसियं समए ॥ ३ ॥**

देवो—रागाद्यन्वितो देवस्तद्रहितस्त्वदेव इति मिथ्यात्वं, तथा हिंसादियुक्तं अधर्मं धर्मबुद्ध्या गृह्णाति अहिंसादियुक्तं धर्मं त्वधर्मबुद्ध्या इति मिथ्यात्वं, मार्गो मोक्षस्याज्ञानादिकः, ज्ञानादियुक्तस्त्वमार्ग इत्यपि मिथ्यात्वस्वरूपं, आरंभपरिग्रहादिप्रवृत्ता

युक्रमचारिणो मुनयः, ये त्वारंभपरिग्रहनिर्गतास्ते त्वसाधव इत्येतदपि मिथ्यात्वं, तथा जीवादयः पदार्थास्तत्स्वरूपा अतत्त्वानि वैशेषिकसांख्यादिप्रणीतानि तु तत्त्वानि, एकनयावलम्बनग्रहात्मकं मिथ्यात्वमिति, दर्शितं समये-सर्वज्ञागमे, कथितं मिथ्यात्वमिति गाथार्थः ॥ ३ ॥ भेदद्वारं अधुना-

आभिग्गहियमणाभिग्गहियं तह अभिनिवेसियं चेव । संसइयमणाभोगं मिच्छत्तं पंचहा होइ ॥ ४ ॥

मिथ्यात्वं सामान्येन द्विविधं-आभोगमिथ्यात्वं अनाभोगमिथ्यात्वं च, आभोगमिथ्यात्वं सद्वेदानां, अनाभोगमिथ्यात्वमवेदानां, विशेषतस्तु पंचप्रकारमेतद्गाथोक्तं, तत्राभिग्रहिकं मिथ्यात्वं साङ्ख्यवैशेषिकबौद्धादिदीक्षायुक्तानाम्, अनभिगृहीतं दीक्षारहितानामाभीरादीनां, अभिनिवेशाज्जातं आभिनिवेशिकं गोष्ठामाहिलादीनामिव, सांशयिकं जीवादिपदार्थगहनसंशयाद्भवति तत् सांशयिकं, अनाभोगाद्-अज्ञानरूपाच्छून्यमनस्कत्वाद्वा यद्भवति तदनाभोगमिथ्यात्वम्, अनेन प्रकारेण पंचधा भवति मिथ्यात्वमथवाऽनेकविधं नयमतावलम्बनेन, उक्तंच-" जावइया वयणपहा तावइया चेव होंति नयवाया । जावइया नयवाया तावइया चेव परसमया ॥ १ ॥ " इति गाथार्थः ॥ तृतीयं द्वारमाह-

मइभेया पुव्वुग्गह संसग्गीए य अभिनिवेसेणं । चउहा खलु मिच्छत्तं साहूण अदंसणेणऽहवा ॥ ५ ॥

मतिभेदात् मिथ्यात्वं याति जमालिवत्, पूर्वव्युद्ग्रहात् मिथ्यात्वं गोविंदवाचकादेरिव, मिथ्यादृष्टिसंसर्गात् मिथ्यात्वं भवति सुराष्ट्रश्रावकस्य भिक्षुभिः सह उज्जयिनीगमनवत्, अभिनिवेशाच्च मिथ्यात्वं रोहगुप्तवत्, चतुर्द्धा खलु मिथ्यात्वगमनं, साधूनामदर्शनेनाथवा-साधूनामदर्शनेन चेति गाथार्थः ॥ ५ ॥ चतुर्थद्वारमधुना-

**मिच्छत्तपरिणओ इह नारयतिरिएसु भमइ इह जीवो । जह नंदो मणियारो तिविक्कमो जह य भट्टो वा॥६॥**

मिथ्यात्वपरिणतः–अतत्त्वाभिनिवेशादशुभसंकल्पसमन्वितः इह–लोके नारकतिर्यक्षु उत्पद्यते भ्रमतीति जीवः–प्राणी, दृष्टान्तद्वयं नन्दमणियारश्रेष्ठिवत् त्रिविक्रमभट्टवद्वा । भावार्थः कथानकगम्यः, तच्चेदम्–

राजगृहे नगरे श्रेणिकराजकाले नन्दमणियारो गृहपतिरासीत्, ऋद्धिमानित्यादिवर्णकयुक्तः, तत्र च श्रीमन्महावीर-वर्द्धमानस्वामी समवसृतः, कौतुकादिना भगवत्समीपं गतः, भगवाँश्च सिन्धुविषये उदायनराजश्रावकप्रव्रज्यार्थं गतः, नन्द-मणियारश्रावकोऽपि पौषधिकस्तृषार्त्तश्चिन्तयामास मिथ्यात्वोदयात्–न किंचिदुदकं विना, तेन लोका वापीकूपतडागादिकं कुर्वंति, किंचिद्वाप्यादिकं जलाश्रयं करिष्यामि यदि रजन्यां प्राणत्यागं न करिष्ये, प्रभातसमये च राज्ञः प्राभृतं गृहीत्वा गतो, दृष्टो राजा, भूमिं याचित्वा जलाश्रयं कारितवान्, तस्याश्च वाप्याश्चत्वारि द्वाराणि कारितानि, चतुर्ष्वपि द्वारेष्वाम्रवृक्षाद्यारामान् कारयित्वा प्रतिश्रयान्नदानादिशालाश्च प्रवर्त्तित्वा द्रविणजातं प्रभूतं तत्र व्ययितं, अतीव गृद्धो मूर्च्छितश्च, अन्यदा निरुपक्रम-व्याध्युत्क्रान्त आर्त्तध्यानोपगतो मृत्वा तस्यां वाप्यां साल्लुरत्वेन गर्भजः समुत्पन्नो, लोकश्लाघादिकं पूर्वभवसंबंधि वचनमाकर्ण्य जातिस्मरोऽभूद्, यथा मया एतद्वचः क्व श्रुतमेतदालोचनात्, ततो देशविरतिः प्राक्तनभवसम्बन्धिनी गृहीता, तथा जलं प्रासु-कं मे पानं, चिक्कसोद्वर्त्तनं चाहारः, एवं कालो वर्तते । अन्यदा भगवतस्तत्रैव नगरे आगमनं संजातं, लोकप्रवादश्च, पुनर्जलाद्यागत-श्राविकावचनं श्रुत्वा साल्लुरस्य वन्दनादीच्छा जाता, चलितश्च शुभाध्यवसायः अन्तरालेऽश्वखुरचूर्णितदेहो व्रताद्युच्चारयित्वाऽष्टादश पापस्थानानि व्युत्सृज्य शरीरादिपरित्यागं कृत्वा मृतो देवलोके उत्पन्न इति संक्षेपार्थः ॥ विस्तरतो ज्ञाताधर्मकथातोऽवसेयः ॥

अधुना द्वितीयकथानकम्—

क्षितिप्रतिष्ठितनगरे त्रिविक्रमाभिधानो भट्टः, स चान्यदा महातडागं कारितवान्, जलभृततडागे च छगलकयागं उपयाचितकं दत्तवान्, वर्षे वर्षे प्रति त्रिविक्रमाभिधानभट्टः, अथार्त्तध्यानपरस्तस्मिँस्तडागे मूर्छितोऽभ्युपपन्नो मृत्वा छगलकः संवृत्तः, तनस्तत्पुत्रैः स एव छगलकः यागार्थं गृहीतो, गृहे आनीतः, तस्य च गृहपरिच्छदं पुत्रादिकुटुंबं च दृष्ट्वा मयैतद् दृष्टपूर्वमितीहापोहमार्गणादिकं पर्यालोचयतो जातिस्मरणं समुत्पन्नं, स चान्यदोदकभृततडागे नीयमानः शब्दं करोति, तं च शब्दायमानं अवधिज्ञानी दृष्ट्वा उक्तवान्—"सयमेव य लुक्ख लोविया अप्पणियाविय खड्ड खाणिया। सयमेवोवाइलद्धये किं छगला! बेऽबे त्ति भासमे ? ॥ १॥" इत्यादि, स च तत् श्रुत्वा तूष्णींभावमुपगतः, ततस्तेषां कुतूहलमुत्पन्नं, पृष्टोऽवधिज्ञानी, तेन च संसारविलसितं पूर्वभवादिकं समस्तं कथितं, स च हस्तान्मुक्तः गृहं गतो निधानं दर्शितवान्, प्रतीतिरुत्पन्ना अस्माकं पितेति संक्षेपार्थः ॥ मिथ्यात्वस्य मुदये जीवो विपरीतदर्शनो भवति, न च तस्मै सद्धर्मः स्वदते, पित्तोदये घृतवत्। विस्तरार्थस्तूत्तराध्ययनादवसेय इति ॥ गुणद्वारमधुना—

मिच्छत्तस्स गुणोऽयं अणभिनिवेसेण लहइ सम्मत्तं। जह इंदनागमुणिणा गोयमपडिबोहिएणंति ॥ ७॥

मिथ्यात्वस्य—अतत्त्वाभिनिवेशरूपस्य गुणः अनभिनिवेशाद्—अनाग्रहात् लभते-प्राप्नोति सम्यक्त्वं—सम्यग्दर्शनमर्हच्छासनमार्गं, दृष्टान्तमाह—यथा इन्दनागमुनिना लौकिकेन गोतमप्रतिबोधितेन श्रीमन्महावीरवर्द्धमानस्वामिप्रथमगणधरप्रतिबोधितेन, लब्धमिति शेषः ॥ विस्तरार्थः कथानकगम्यः, तच्चेदम्—

कश्चिद् रंकश्चम्पानगर्या राजगृहं प्रति प्रस्थितः, सार्थेन सार्द्धमुच्चलितः प्रयाणकमेकं, भोजनवेलायां भिक्षामटित्वा भुक्तवान्, अनुचिताहारत्वादजीर्णं संजातं, द्वितीयदिने शरीरापाटवं ज्ञात्वा वृक्षाधोऽव्यवस्थित एव तूष्णींभावेन स्थितः, स च लोकेन भोजनवेलायां स्मृतः, कथितश्च यथा वृक्षाधस्तिष्ठत्युपोषित इत्येकान्तरितभोजनकारीति पारणकदिने लड्डुकाद्यतिभक्त्या दत्तं, ततः स्निग्धमधुराहारादिभोजनात् षष्ठेन जीर्णं तद्भोजनं, ततश्च लोकोऽतिभक्त्या दातुमारब्धः, तस्य च सैवावष्टम्भबुद्धिः संजाता, सार्थवाहेन रक्तकर्पटपादुकादि दत्तं अन्येन मृगत्वगादि दत्तमेवं च व्रती संजातः, राजगृहमाप्तौ लोकोऽपि बहुमानेन निमंत्रयति भोजनं च न करोति यावन्न भुंक्ते इन्द्रनागर्षिः, भेरिनिरूपणा च कृता लोकैः (भुक्त) इन्द्रनाग इति ज्ञापनार्थं, तेन च कालेन भगवान् ग्रामानुग्रामादिक्रमेण विहरन् गुणशीलकचैत्ये समवसृतः, पौरुष्युत्तरकालं भगवता गौतमस्वामी भिक्षार्थं निर्गच्छन् विधृतः, अनेषणा विद्यते साम्प्रतं, ततः पुनरपि क्षणमात्रे प्रेषितः, उक्तश्च यथा तव सम्मुखमिन्द्रनागनामा परिव्राजकऋषिः लोकपरिवारित आगमिष्यति, स च त्वया वक्तव्यो तथा बहुपिंडि (क एकपिण्ड) को व्याहरति, तयेति कृत्वा गतोऽसौ, दृष्ट्वा च तं तथैवालप्तवान्, तेन च गौतमः पृष्टः—कथमहं बहुपिण्डिकः ?, भगवान् मम गुरुर्जानाति, सच तच्छ्रवणानन्तरं लघुकर्म्मत्वादनभिनिवेशाच्च भगवत्समीपं गतो, भगवता चाहारपानादिकमारंभदोषजातं सविस्तरं समस्तं कथितं, साधूनां निरवद्यवृत्तिकं परिहारिकादिगुणरूपं कथितं, स च पूर्वानुभूतक्रियानुष्ठानत्वात् जातजातिस्मरणः प्रत्येकबुद्धः संजातः, इन्द्रनागाध्ययनं च प्ररूप्य आयुष्कक्षयेण सिद्धश्चेति संक्षेपार्थः ॥ विस्तरार्थस्त्वावश्यकविवरणादवसेय इति । षष्ठं द्वारमधुना यतनालक्षणमाह—

**जयणा लहुया गरुई अम्मडसीसेहऽदत्तभीएहिं । मरणब्भुवगमकरणं बंभे कप्पे समुप्पन्ना ॥ ८ ॥**

अस्या भावार्थः कथानकगम्यः, अतः कथानकं कथ्यते,—

" तेणं कालेणं तेणं समएणं बंभणपरिव्वायगा अट्ठ होत्था, तंजहा–कंडू य १ करंडू य २, अम्मडे य ३ परासरे ४। कण्हे ५ दीवायणे चेव ६, देवगुत्ते य ७ नारए ८ ॥१॥ तेसिणं परिव्वायगाणं इमे एयारूवे किरियाकलावे होत्था, दाणधम्मं सोयधम्मं तित्थण्हाणं उट्ठाइसु अणारूहणं आहरणचाओ इत्थिकहाइवज्जणं मागहप्पत्थप्पमाणं उदगं पायव्वे आढकं सिणायव्वे अद्धादकं पक्खालणे, तंपि उदगं दिन्नं अन्नेणं परिपूअं तसरहियं कप्पइ, आहाकम्मिए कीयगडे अभिहडे वा आहारजाए इच्चाइ। तेणं कालेणं तेणं समएणं अम्मडे परिव्वायगे कंपिल्लपुरे परिवसइ, रिउवेययजुवेअसामवेयअथव्वणाणं इतिहासपंचमाणं निघंटुछट्ठाणं चउण्हं वेयाणं सारए पारए इच्चाइ, समणोवासए अहिगयजीवाजीवे उवलद्धपुन्न ४२ पावे ८२ आसव ४२ संवर ५७ निज्जर १२ किरियाहिगरण २५ बंध ४ मोक्खकुसले, वन्नओ, ओहिनाणी वेउव्वियलद्धी छट्ठंछट्ठेण अणिक्खित्तेणं तवोकम्मेणं अप्पाणं भावेमाणे विहरइ। तस्स णं अम्मडस्स सत्त अंतेवासिसयाइं होत्था, ते य अन्नया कयाइ कंपिल्लपुराओ नयराओ पुरिमतालं नयरं संपट्ठिया, अंतरा य उदगट्ठाणं पत्ता, न य कोइ उदगदाया अत्थि, तओ तेहिं चिंतियं–"अदिन्नं उदगं गेण्हामो तो वयलोवो, अह न गिण्हामो तो अवस्सं मरामो, किं उचियं?, भणियं च–'वरं प्रवेष्टुं ज्वलितं हुताशनं, न चापि भग्नं चिरसंचितं व्रतम्। वरं हि मृत्युः सुविशुद्धकर्म्मणा, न चापि शीलस्खलितस्य जीवितम् ॥ १ ॥" तओ सव्वेसिं वयपालणमणुमयं, तओ अणसणकयनिच्छया गंगानईतीरे वालुयापुलिणे दब्भसंथारोवगया अंजलिमउलिकडा एवं वयासी– " नमोत्थु णं अरहंताणं भगवंताणं, नमोत्थु णं समणस्स भगवओ महावीरस्स अम्मापियरस्स, नमोत्थुणं अम्मडस्स

परिवायगस्स, पुव्विंपिय ण अम्हेहिं समणस्स भगवओ महावीरस्स अंतिए थूलए पाणाइवाए पच्चक्खाए जाव परिग्गहे पच्चक्खाए, इयाणिंपिय णं तस्सेव समणस्स भगवओ महावीरस्स अंतिए सव्वं पाणाइवायं पच्चक्खामि जाव सव्वं परिग्गहं पच्चक्खामि, तहा कोहं जाव मिच्छादंसणसल्लं, अट्ठारस पावठाणाइं सव्वं असणं सव्वं पाणं सव्वं खाइमं सव्वं साइमं जावज्जीवं वोसिरामि, जंपि य सरीरं इट्ठं कंतं पियं इच्चाइ तंपि य चरमेहिं ऊसासनीसासेहिं वोसिरामि, पायवोगमणेणं ठिया, " तए णं अम्मडपरिवायगसीसा बहूइं भत्ताइं अणसणाए छेइत्ता बंभलोए कप्पे दससागरोवमट्ठिइया देवा जाया इति संक्षेपार्थो, विस्तरार्थं उववाइउवंगे जाणियव्वो ॥ इयाणिं सत्तमं दारं—

**अइयरणं जह जातं सिवमोग्गलमाइ दीववंभेसु । परिवडियविभंगाणं संकियमाईहिं सुत्तेहिं ॥ ९ ॥**

अतिचरणं यथा जातं–यथोत्पन्नं मिथ्यात्वस्येति गम्यते, शिवराजर्षेर्मुद्गलपरिव्राजकस्य च, द्वीपे सप्तमद्वीपविषयं ब्रह्मलोके पंचमकल्पब्रह्मलोकविषयं यथासंख्येन प्रतिपतितविभङ्गज्ञानयोः शंकितादिभिः सूत्रैरिति संक्षेपार्थो । विस्तरार्थः कथानकयोरवसेयः, ते चेमे—

तेणं कालेणं तेणं समएणं हत्थिणपुरे नामं नयरे होत्था, तत्थ णं सिवे राया, धारिणी देवी, तस्स णं सिवस्स रन्नो पुत्ते धारिणीए देवीए अत्तए सिवभद्दे नामं कुमारे होत्था, अन्नया कयाइ तस्स सिवस्स रन्नो रज्जधुरं चिंतेमाणस्स पच्छिमरत्तकालसमयंसि कुडुंबजागरियं जागरेमाणस्स इमे एयारूवे अज्झत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था–अत्थि ता मे पुरा पोराणाणं कडाणं कम्माणं कल्लाणाणं कल्लाणे फलवित्तिविसेसे जेणं अहं हिरन्नेणं वड्ढामि रज्जेणं रट्ठेणं पुरेणं अंतेउरेणं जाव

पीतसकारेणं मंडेव मंडेव वड्ढामि, तो जाव कल्लाणे फलवित्तिविसेसे ताव मे सेयं कल्लं पाउप्पहायाए रयणीए सुबहुं भत्तपाणं उवक्खडावेत्ता मित्तनाइनियगसंबंधिपरियणं भोयावेत्ता, सुबहुं लोहीलोहकडाहकडुच्छाइत्तं पसत्थं ताव सभंडगं घडावेत्ता सिवभद्दं कुमारं रज्जे ठावेत्ता दिसापोक्खियतावसत्ताए पव्वइत्तए, पव्वइएवि य णं समाणे एवं एयारूवं अभिग्गहं अभिगिण्हिस्सामि—कप्पइ मे जावज्जीवाए छट्ठंछट्ठेणं अणिक्खित्तेणं तवोकम्मेणं उड्ढं बाहाओ परिगिज्झिय २ सूराभिमुहस्स आयावणभूमीए आयावेमाणस्स विहरित्तए। छट्ठखमणपारणगंसि य दिसाचक्कवालेणं जाव फलाइ गिण्हित्तए, इच्चाइ सव्वं, पभाए तहेव करेइ जाव सिवभद्दं रायं आउच्छित्ता दिसापोक्खियतावसत्ताए पव्वइए, नो होत्तियतावसत्ताए जाव नो हत्थितावसत्ताए। तए णं से सिवरायरिसी पढमे छट्ठपारणगंसि आयावणभूमीओ पच्चुत्तरइ, जेणेव गंगामहानई तेणेव उवागच्छइ, गंगं ओगाहेइ, जलमज्जणं करेइ, दब्भकलसहत्थगए गंगाए उत्तरित्ता पुव्वाए दिसाए सोमे महाराया पत्थाणे पत्थियं सिवं रायरिसिं अभिरक्खउ, जाइं तत्थ कंदाइं मूलाइं फलाइं समिहाओ य ताइं अभिजाणउ, दिसिं अवलोएइ, दिसं पसरइ फलकुसुमदब्भाइ गेण्हेति, जेणेव सए उडए तेणेव उवागच्छइ, संकाइयं मुयइ, मट्टियाए पालिं बंधेइ, अरणिएण नवं अग्गिं उप्पाएत्ता, महुघयतंदुलेणाराइणा अग्गिहोत्तं करावेत्ता वइस्सदेवं बलिं करेइ, तओ अप्पणा आहारेइ, तओ छट्ठं करेइ, बिइयछट्ठखमणपारणगंसि दक्खिणाए दिसाए जमे महाराया अणुजाणावेइ, एवं तइयं, तओ पच्छिमाए वरुणे महाराया, उत्तराए वेसमणे महाराया अणुजाणावेइ, एवं एएणं चक्कवालेणं तवं चरंतस्स पगइए भद्दयाए पगइए विणीययाए पयणुकोहमाणमायालोभयाए विभंगे अन्नाणे समुप्पन्ने, पासइ अस्सिं लोए सत्त दीवा सत्त समुद्दा, तेण परं वोच्छिन्ना दीवा य समुद्दा य, तए

णं तस्स सिवस्स रायरिसिस्स इमे एयारूवे अब्भत्थिए चिंतिए जाव संकप्पे समुप्पज्जित्था—अत्थि मे अइसेसेनाणदंसणे, तएणं हत्थिणाउरे नयरे गंतूणं तियचउक्कचच्चराइसु एयमट्ठं पयासेमि जाव कहेइ, अस्सिं लोए जंबूदीवाइया दीवा लवणाइया सागरा सत्त, तेण परं वोच्छिन्ना दीवा य समुद्दा य। तेणं कालेणं तेणं समएणं समणे भयवं महावीरे सहसंबवणे उज्जाणे समोसढे, इमीसे कहाए लद्धट्ठा जाव परिसा पज्जुवासइ, जाव धम्मकहा। "जह जीवा बुज्झंती मुचंती जह य संकिलिस्संति। अट्टवसट्टोवगया संसारं परियडंति जहा ॥१॥" इत्यादि। तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स अंतेवासी गोयमे बहुजणसद्दं सोच्चा संकिए जाव भत्तपाणं गहाय भगवओ समीवमागए भुत्तुत्तरकालसमयंसि पुच्छइ,—भगवं! सव्वं सिवरायरिसिचरियं कहेइ, अहं पुण गोयमा! एवमाइक्खामि, अस्सिं लोए असंखेज्जा दीवसमुद्दा, तेणं सा महइमहल्लिया महच्चपरिसा समणस्स० अंतिए एयमट्ठं सोच्चा जेणेव सिवरायरिसी तेणेव उवागच्छइ २ त्ता एवं वयासी,—जन्नं सिवे रायरिसी विभंगनाणेण नाउं भासइ तन्नं मिच्छा, अहं पुण गोयमा! एवं आइक्खामि जंबुद्दीवाइया सयंभूरमणसागरावसाणा ता असंखेज्जा दीवसमुद्दा अड्ढाइयउद्धारसागरसमयपमाणा, तए णं से सिवरायरिसी एयमट्ठं लोयाओ सोच्चा संकिए कंखिए विइगिंछिए, संकियस्स य से अन्नाणए परिवडिए, न किंचि पेक्खइ दिट्ठिगोयराइयं, तओ तस्सेव सिवतावसस्स इमे एयारूवे अज्झत्थिए होत्था—पुव्विं पासामि इयाणिं नो पासामि, तो गच्छामिणं समणं भगवं महावीरं वंदित्ता एयमट्ठं पुच्छित्तएत्तिकट्टु एयमट्ठं संपहारेत्ता गमणाए संपट्ठिए जेणेव समणे भगवं महावीरे जाव पज्जुवासइ, समणे ३ केवलिपन्नत्तं धम्मं कहेइ, तएणं से सिवे पडिबुद्धे समाणे एवं वयासी—इच्छामिणं भंते! सयमेव पव्वाविउं सयमेव मुंडाविउं सयमेव सिक्खाविउं सयमेव आयारगोयरविणयवेणइयं जाव धम्मं आइसिउं, तएणं

समणे भगवं महावीरे सिवं सयमेव पव्वावेइ जाव एवं देवाणुपिया ! गंतव्वं एवं चिट्ठियव्वं जाव अस्सि च णं अट्ठे छणमवि नो पमाएयव्वं खमियव्वं खमावेयव्वं, तं धम्मियं उवएसं सम्मं संपडिच्छइ, बहूइं वासाइं सामण्णपरियागं पाउणइ, जस्सट्ठाए कीरए नग्गभावे मुंडभावे अण्हाणयं अदंतधुवणयं केसलोचो कट्ठसेज्जाओ उच्चावया गामकंटया बावीसं परीसहोवसग्गा अहियासिज्जंति तमट्ठं आराहेइ चरिमेहिं ऊसासनीसासेहिं सिद्धे बुद्धे मुत्ते परिनिव्वाए सव्वदुक्खप्पहीणे । सिवकहाणयं संखेवेणं, वित्थरेण विवाहपन्नत्तीए एक्कारसमे सए । मोग्गलकहाणयंपि एयाणुसारेण, नवरं उड्ढं बंभलोयं कप्पं विभंगनाणेण पासइ, तेण परं वोच्छिन्ना देवा य देवलोगा य जाव भगवया सव्वट्ठसिद्धदेवपज्जवसाणदेवपरिकड्ढणासुयणेण संकियस्स कंखियस्स से विभंगनाणे परिवडिए, इत्यादि पूर्ववत् सर्वम्, विस्तरार्थं भगवत्या अस्यापि कथानकस्य ॥ भंगद्वारमाह–

छट्ठेणं आयावण विभंगनाणेण जीवजाणणया । ओही केवलनाणं तो भंगो होइ मिच्छस्स ॥ १० ॥

षष्ठाष्टमादितपसा आतापनां कुर्वतः ऊर्ध्वबाहुभ्यामुपशमादिना गुणेन च विभंगज्ञानस्योत्पत्तिर्भवति, तेन चोत्पन्नेन जीवादीन् पश्यति, ततः सम्यग्भावनाभिः केवलज्ञानं चोत्पन्नं, ततो भङ्गो मिथ्यात्वस्येति गाथार्थः ॥ भावार्थः कथ्यते–

कश्चित् शिवकर्म्मनामा व्रती षष्ठंषष्ठेन तपश्चर्या, ऊर्ध्वबाहुभ्यां चातापनां करोति, ततस्तस्य प्रकृत्युपशमादिना भद्रकत्वेन च विभङ्गज्ञानमुत्पन्नं, ततो जीवान् जानातीति जीवान् अतिसंक्लिश्यमानान् जानाति विशुध्यमानांश्च जानाति, तेन च सम्यग्ज्ञानेन सम्यक्त्वोत्पत्तिः, समकं मतिश्रुतावधिज्ञानानि, उक्तं च–"विब्भंगाओ परिणमं सम्मत्तं लहइ मइसुओहीणि । तयभावम्मि मइगुए सुयलंभं केइ उभयंति ॥ १ ॥" इत्यादि, ततः केवलज्ञानोत्पत्तिः, अनेन कादाचित्कभूतेन न्यायेन मिथ्यात्वस्य भंगोत्ति

नाम्नः तथा जायत इति, पुनः प्रादुर्भावाभावेनेति । नवमं भावनाद्वारमधुना—

**भावण जह तामलिणा इड्ढीविसया पुणो अणसणं च। पुणरवि खोभणकाले लहुकम्माणं इमा मेरा ॥११॥**

भाव्यत इति **भावना**—अनित्यत्वादिका, यथा तामलिश्रेष्ठिना ऋद्धिविषया अनित्यत्वभावना पुनरनशनकाले शरीरानित्यता चिंतिता, पुनरप्यसुरकुमारसम्बन्धिपरिकरक्षोभणसमये निदानाकरणादिना भावना भावितेति, लघुकर्म्मणां प्राणिनां मिथ्यादृष्टीनामपि भवभावना शक्या भवतीति, उक्तंच—“प्राणेभ्योऽपि गुरुर्द्धर्म” इत्यादि, ‘एक एव सुहृद्धर्म’ इत्यादि । भावार्थः कथानकगम्यस्तच्चेदम्—

तेणं कालेणं तेणं समएणं तामलित्ती नामं नयरी होत्था, तत्थ णं तामली नाम मोरियवंसे गाहावई होत्था, अड्ढे दित्ते अपरिभूए आओगसंपओग जाव बहुजणस्स संमए, तस्स णं तामलिस्स गाहावइस्स पुव्वरत्तावरत्तकालसमयंसि कुडुंबजागरियं जागरमाणस्स इमे एयारूवे संकप्पे समुप्पज्जित्था—अत्थि मे कल्लाणफलवित्तिविसेसे जेणं अहं हिरन्नसुवन्नाइणा वड्ढामि, जाव मित्तनाइनियगसंबंधिपरियणो आढाइ ताव ता मे सेयं कल्लं पाउपभायाए रयणीए जलंते सूरिए सुबहुं भोयणजायं उवक्खडावेत्ता मित्तनाइनियगसंबंधिं चेव परियणं भोयावेत्ता तेसिमंतिए जिट्ठपुत्तं कुडुम्बे ठावेत्ता तओ पच्छा जे इमे गंगाकूले वाणपत्था तावसा तेसिं मज्झे पाणामाए पव्वज्जाए पव्वइत्तए, पव्वइए य णं समाणे इमं एयारूवं अभिग्गहं अभिगिण्हिस्सामि, कप्पइ मे जावज्जीवाए छट्ठंछट्ठेणं अणिक्खित्तेणं तवोकम्मेणं उड्ढं बाहाओ पगिज्झिय २ सूराभिमुहस्स आयावणभूमीए आयावित्तए, छट्ठक्खमणपारणगंसि य तामलित्तीए नयरीए उच्चनीयमज्झिमकुलाइं घरसमुदाणस्स भिक्खायरियाए

भंगो भावना च तामलि कथा.

भट्टित्ता सुद्धोदणं पडिगाहेत्ता तिसत्तखुत्तो दएणं पक्खालित्ता आहारं आहारित्तएत्तिकट्टु, एवं संपेहेइ, एवं संपेहित्ता पभायसमए मन्नं तहेव कारावेइ जाव आहारं आहारेइ, एएणं तवोकम्मेणं सट्ठिं वाससहस्साणि जावेइ । तएणं से तामली वालतवस्सी तेणं तवोकम्मेणं सुक्के निम्मंसे अट्ठिचम्मावणद्धे किसे धमणिसंतए जाए यावि होत्था, तए णं तस्स तामलिस्स पुणो अणिच्चजागरियं जागरयाणस्स इमे एयारूवे संकप्पे समुप्पज्जित्था—तवोकम्मेणं सुक्के जाव अट्ठिचम्मावणद्धे जाए तं जाव अत्थि मे उट्ठाणे कम्मे बले वीरिए पुरिसयारपरक्कमे ताव मे सेयं कल्लं पाउप्पभायाए रयणीए तामलित्तीए नयरीए दिट्ठा य आभट्ठा य परिसंथुया य पासंडत्था य गिहत्था य आपुच्छित्ता य खमावेत्ता य तामलित्तीए नयरीए नियत्तणिगमंडलं आलिहित्ता भत्तपाणं पडियाइक्खिय पाओवगमणं पडिवज्जित्तए, जाव सव्वं करेइ । तेणं कालेणं तेणं समएणं वलिचंचारायहाणी अणिंदया होत्था, तए णं ते बलिचंचारायहाणिवत्थव्वा बहवे असुरकुमारा देवा य देवीओ य देवाणुप्पियं विन्नवेमो—अम्हे णं देवाणुप्पिया ! अणिंदा, तं तुम्हे देवाणुप्पिया ! बलिचंचाए रायहाणीए नियाणं करेह अट्टं बंधह जेण अम्हाणं सामी भवह जेण अम्हेहिं सद्धिं विउलाइं भोगभोगाइं भुंजेमाणा विहरह, तए णं से तामली वालतवस्सी दोच्चंपि तच्चंपि एवं वुत्ते समाणे नो आढाइ नो परिजाणइ, तुसिणीए संचिट्ठइ, एवं ते अणाढाइज्जमाणा जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया, तए णं से तामली बालतवस्सी सट्ठिं वाससहस्साइं तवं काऊण सट्ठिं दिवसाइं अणसणाए छेएत्ता ईसाणे कप्पे ईसाणदेविंदत्ताए उववन्ने, अट्ठावीसाए विमाणावाससयसहस्साए भसीइए सामाणियसाहस्सीणं तेत्तीसाए तायत्तीसगाणं चउण्हं लोगपालाणं अट्ठण्हं अग्गमहिसीणं अन्नेसिं च बहूणं वेमाणियाणं देवाणं देवीण य सामी उववन्नो आहारयपज्जत्तीए० । तए णं ते बलिचंचारायहाणिवत्थव्वा देवा तामलिं बालतवस्सिं ई-

साणे कप्पे ईसाणवडिसए ईसाणदेविदत्ताए उववन्नं जाणित्ता आसुरत्ताए ते अन्नमन्नं सद्दावेत्ता आगम्म तामलिसरीरगं वामे पाए सुंबेण तिवंधित्ता तामलित्तीए नयरीए आकड्ढविकड्ढिं करेमाणा उग्घोसणं करेंति–के एस णं तामली बालतवस्सी अपत्थियपत्थए दुरंतपन्तलक्खणे सिरिहिरिपरिवज्जिए सयंगहीयलिगे, तए णं ईसाणकप्पवासी देवा सामिसरीरं आकड्ढविकड्ढिं करेमाणं पासित्ता सामीं विन्नवंति, तए णं से ईसाणे देविंदे तेसिमंतिए एयमट्ठं सोच्चा निसम्म आसुरत्ते तिवलियं भिउडिं निलाडे साहट्टु सव्वओ समंता अवलोकयति । तए णं ते वलिचंचारायहाणिवत्थव्वा बहवे देवा य देवीओ य छारीभूया इंगालीभूया अन्नमन्नं आलिंगेंति जाव भीया ईसाणे कप्पे देविंदं कुवियं पासित्ता आणाउववायवयणनिद्देसे वट्टंति नाइभुज्जोकरणयाए खामेंति य । तए णं से ईसाणे देविंदे देवराया तेयलेसं पडिसाहरइ, पोत्थयवायणं सिद्धाययणगमणपूयणाइ, सम्मत्तउप्पत्ती, केवइयं कालं ठिई; (दो) सागरोवमाइं साहियाइं, से णं भंते! ईसाणे देविंदे देवलोगाओ आउक्खएणं ३ चुए कहिं उववज्जिही?, गोयमा ! महाविदेहे सिज्झिहि, विस्तरेण भगवत्यां ॥ मिथ्यात्वं नवभेदं समाप्तमिति । साम्प्रतं सम्यक्त्वं नवप्रकारं प्रतिपादयन्नाह–

**जियरागदोसमोहेहिं भासियं जमिह जिणवरिंदेहिं । तं चेव होइ तच्चं इय वुद्धी होइ सम्मत्तं ॥ १२ ॥**

जितरागद्वेषमोहैः–अपगतप्रीत्यप्रीत्यज्ञानरूपैर्यद्भाषितं–जीवादिपदार्थकदम्बकं सदेवमनुजायां पर्षदि प्रणीतं, कैः ?– जिनवरेन्द्रैः, तत्र जिनाः–अवध्यादिजिनास्तेषां वराः केवलिनः तेषामपि इन्द्राः–चतुस्त्रिंशदतिशययुक्तास्तीर्थकरास्तैस्तदेव तत्त्वं, उक्तं च–"वीतरागा हि सर्वज्ञा, मिथ्या न ब्रुवते वचः । तस्मात्तेषां वचः सत्यं, तथ्यं भूतार्थदर्शनम् ॥ १ ॥" नान्यत् कपिलकादिसरागप्रणीतं पंचविंशतितत्त्वरूपं तत्त्वमित्येवंरूपा या मतिः–बुद्धिः सा भवति–जायते सम्यक्त्वं–सम्यक्त्वदर्शन-

यमिति संक्षेपार्थः ॥ द्वितीयं भेदद्वारमाह—

**एगविह दुविह तिविहं चउहा पंचविह दसविहं सम्मं । दव्वाइकारगाइय उवसमभेएहिं वा सम्मं ॥ १३ ॥**

जीवादिपदार्थरुचिलक्षणमेकविधं, उक्तं च—त्रिकालविद्भिस्त्रिजगच्छरण्यैर्जीवादयो येऽभिहिताः पदार्थाः । श्रद्धानमेषां परया विशुद्ध्या, तद्दर्शनं सम्यगुदाहरंति ॥ १ ॥ त्रैकाल्यं द्रव्यषट्कं नवपदसहितं जीवषट्कायलेश्याः, पंचान्ये चास्तिकाया व्रतसमितिगतिज्ञानचारित्रभेदाः । इत्येते मोक्षमूलं त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः, प्रत्येति श्रद्दधाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः ॥ १ ॥ अथवा द्रव्यभावसम्यक्त्वं निश्चयव्यवहाररूपं नैसर्गिकाधिगमिकरूपं वा, पौद्गलिकं पारिणामिकं वा द्विविधं, अथवा क्षायिकं क्षायोपशमिकं वा, कारकं रोचकं दीपकं वा त्रिविधं, क्षायिकादि सास्वादनप्रक्षेपेण चतुर्विधं, वेदकप्रक्षेपेण पंचविधं, नैसर्गिकादि दशविधं वा, उक्तं च "निसग्गुवएसरुई आणरुई सुत्तबीयरुइमेव । अभिगमवित्थाररुई किरियासंखेवधम्मरुई ॥ १ ॥" यथा प्रज्ञापनोपांगे, विस्तरार्थः शास्त्रान्तरेभ्योऽवसेयः, इति गाथार्थः ॥ तृतीयं द्वारमाह—

**काऊण गंठिभेयं सहसंमुइयाए पाणिणो केइ । परवागरणा अन्ने लहंति सम्मत्तवररयणं ॥ १४ ॥**

कृत्वा ग्रन्थिभेदं यथाप्रवृत्तिकरणापूर्वकरणानिवृत्तिकरणस्थितिघातरसघातगुणश्रेणिगुणसंक्रमादिकरणक्रमेण प्रकृतिबंधस्थितिबन्धअनुभागबन्धप्रदेशबन्धादिना सप्तानां मूलप्रकृतीनामन्तःकोटाकोटिं कृत्वा स्थितिं विशुद्धलेश्याध्यवसायः साकारोपयोगे वर्तमाना वर्धमानशुभपरिणामो ध्रुवप्रकृतीः सप्तचत्वारिंशद् भवप्रायोग्या एकविंशत्युत्तरप्रकृतीर्बध्नंश्च स्वसम्मत्यादिना—जातिस्मरणादिना गुरुवद्गुरुसन्निधानेन वा लभते—प्राप्नोति सम्यक्त्वमेव वररत्नं—मुक्ताफलाद्यपेक्षया प्रधानरत्नं, पल्लकादिभिर्दृष्टा-

न्तैर्दृष्टश्रुतादिप्रकारैर्वा सम्यग्दर्शनमवाप्यते, श्रेयांसवदिति । चतुर्थद्वारमधुना–

**सम्मत्तपरिब्भट्ठो जीवो दुक्खाण भायणं होइ । नंदमणियारसेट्ठी दिट्ठंतो एत्थ वत्थुम्मि ॥ १५ ॥**

सम्यक्त्वात्–अर्हच्छासनश्रद्धानलक्षणात् परिभ्रष्टः–च्युतो जीवः–प्राणी 'दुःखानां' शारीरमानसानां 'भाजनम्' आस्पदं 'भवति' जायते, नन्दमणियारश्रेष्ठी राजगृहनगरसमुत्थः पूर्वोक्तः दृष्टान्तः, अत्र–वस्तुनि दोषाधिकारे, सम्यक्त्वादि परित्यज्य मिथ्यात्वं गतो वाप्यादि कृत्वा अतीवमूर्च्छादिसमन्वितः आर्त्तध्यानेन मृत्वा सालूरत्वेनोत्पन्नः तिर्यग्योन्यां गत इति । कथानकं मिथ्यात्वाधिकारे प्राक् प्रतिपादितमेव । साम्प्रतं गुणरूपं पंचमं द्वारमाह–

**सम्मत्तस्स गुणोऽयं अचिंतचिंतामणिस्स जं लहइ । सिवसग्गमणुयसुहसंगयाणि धणसत्थवाहो व ॥१६॥**

सम्यग्दर्शनगुणोऽयं, किंभूतस्य सम्यक्त्वस्य ?–अचिन्त्यचिंतामणिकल्पस्य–अचिन्त्यमोक्षादिफलप्रापकस्य 'यद्' यस्मात् लभते–प्राप्नोति, कियन्तमा(न्तीत्या)ह–'शिवस्वर्गमनुजसुखसंगतानि–मोक्षनाकिनरसुखानि, क इव ?–धनसार्थवाहवदिति गाथार्थः॥ व्यासार्थः कथानकगम्यः, तच्चेदं–

क्षितिप्रतिष्ठितनगरे धनः सार्थवाहः प्रतिवसति स्म, स चान्यदाऽर्थार्थी वसंतपुरं प्रति प्रस्थितः पटहकोद्घोषणापूर्वकं, तच्चोद्घोषणं श्रुत्वा आचार्येण सार्थवाहसमीपं गीतार्थसाधुसंघाटकः प्रेषितः सार्थवाहानुज्ञापनार्थं, दृष्टश्च सार्थवाहः, तस्य च तस्मिन् काले केनचित् फलभृतं भाजनमुपढौकितं, तेन च भद्रकत्वात्तीर्थकरजीवत्वात् सामाचार्यकुशलत्वात् साधुसंघाटकस्य दत्तं, तैश्चोक्तं–यथा नास्माकं कल्पते फलानि, निःस्पृहत्वादिगुणगौरवादतीव भक्तिरुत्पन्ना, तेन (उक्तं) आचार्यास्तथा प्रोत्साहनीया

यथा अवश्यं मया सह गमनं कुर्वंति, सर्वकार्यंपरहं भलिष्यामि, गत्वा कथितमाचार्याणां, चलिताः सार्द्धं, अटव्यां वर्षाकालेन विभृतास्तैश्च पूर्वानीतं धान्यादि भक्षितं, पश्चात् कन्दमूलादिभक्षणे प्रवृत्ता लोकाः, साधवश्च गुहायां स्थिताः स्वाध्यायादि कुर्वन्तः तिष्ठन्ति स्म, सार्थवाहस्य चिंता संजाता–को मम सार्थे दुःस्थित इति, पर्यालोचयता ज्ञातं–साधवो, यतः पुष्पादिफलभक्षणं न कुर्वंति ते, प्रभाते रसवतीपालकं पृष्टवान्–किं साधवोऽत्रागच्छंति ? तेन–उक्तं कतिचिद्दिनानि वर्त्तन्ते आगतानां, स चात्मानं प्रमादिनं निन्दितुमारब्धो–हा ! मया मन्दभाग्येन साधूनां न तृप्तिः कृतेति पूर्वं प्रतिपद्य,ततो दिग्विभागं पृष्ट्वा रसवतीपालकदर्शित-मार्गेण गतः साधुसमीपं सार्थवाहो लज्जितः स्वचेष्टितेन, पश्चाद् घृतेन निमंत्रितवान्, आचार्येण तदाग्रहं ज्ञात्वा यदेषणीयं प्रासुकं तद् ग्रहीतव्यं इति भणित्वा प्रेषिताः साधवः, तेन च पात्रदानेन सम्यक्त्ववीजलाभो निर्वर्त्तितः उत्तरकुर्वादिभोगाश्च, ततस्त्रयोदश-भवे मोक्षसुखप्राप्तिः, एवमस्य सुमानुषसुदेवत्वादिक्रमेण शिवसुखाप्तिः संजाता, विशेषस्तु वृषभचरितादवसेय इति। "सम्यक्त्वमेकं मनुजस्य यस्य, हृदि स्थितं मेरुरिवाप्रकम्प्यम् । शंकादिदोषापहृतं नरेन्द्र !, न तस्य तिर्यङ्नरके भयं स्यात् ॥ १ ॥" अधुना यतनाख्यं षष्ठं द्वारमाह—

लोइयतित्थे उण ण्हाणदाणपेसयणपिंडझुणणाइं । संकंतुवरागाइसु लोइयतवकरणमिच्चाइ ॥ १७ ॥

लौकिकतीर्थे पुनः—गंगादौ स्नानं, दानं धिग्जात्यादेः, प्रेषणं अस्थ्यादेः तीर्थस्थाने, पिण्डप्रदानं मृतस्य पित्रादेः, झुणणं हननं वह्नौ घृतादिप्रक्षेपः, आदिशब्दात् सारकादिपरिग्रहः, 'संक्रान्त्युपरागादिषु' उपरागः–सूर्यग्रहणादिरूपः लौकिकतपः वच्छवारसि अनन्तिपर्क आदिशब्दात् 'पडिवन्नदंसणस्स य न वंदिउं पणमिउं च कप्पंति । अन्नाइं चेइयाइं परतित्थि-

यदेवयाइं च ॥ १ ॥ धम्मगिट्ठिगवणिहगअणाहसालातडागपवबंधो। पिप्पलअसंजयाणं पावारहलादिगोदाणं॥ २ ॥ " इत्यादि, सर्वत्र गुरुलाघवालोचनेन यथाऽन्येषां स्थिरीकरणप्रवृत्त्यादि मिथ्यात्वादिविषयं न भवति तथा पर्यालोच्य विधेयमिति ॥ अधुना अतिचारद्वारं सप्तममाह—

**एत्थ य संका कंखा वितिगिच्छा अन्नतित्थियपसंसा। परतित्थिओवसेवा य पंच दूसंति सम्मत्तं ॥ १८ ॥**

संशयकरणं शङ्का जीवादिपदार्थविषया, मतिदौर्बल्यादतिगहनेषु धर्मास्तिकायादिष्ववबुध्यमानः शंकां करोति, राजपुत्रगृहीतमयूरांडकद्वये एकस्य शंकावत्, कथानकं ज्ञाताधर्मकथासु, आकांक्षा—अन्यान्यदर्शनलवदर्शनादेकनयमतभावित्वादनभिनिवेशाच्चाकांक्षा, सुगतादिदर्शनविषया, राजामात्याश्वापहृतानीतराज्ञोऽतीवाहाराकांक्षावत्। विचिकित्सा फलं प्रत्यविश्वासः, किमस्य तपःक्लेशायासस्यायत्यां मम फलसम्पद् भविष्यति उत नेति सन्देहलक्षणा, जिनदत्तश्रावकदत्तविद्यासाधकविद्याविचिकित्सावत्। विद्वज्जुगुप्सा वा गंधिकश्रावकवदिति, अन्यतीर्थिकप्रशंसा न कार्याऽतिचारहेतुत्वात् शकडालवत्। परतीर्थिकोपसेवायामतिचरति सम्यग्दर्शनं, भिक्षुमिलितसौराष्ट्रश्रावकवत् ॥ अनुपबृंहणादिभिरप्यतिचरति च इति, उक्तं च "नो खलु अप्परिवडिए निच्छअओऽमइलिए व संमत्ते। होइ तओ परिणामो जत्तो अनुबूहणाइया ॥ १ ॥" इत्यादि, उपबृंहणायां श्रेणिकराजा, स्थिरीकरणे आषाढाचार्यः, वात्सल्ये वज्रस्वामी, दर्शनप्रभावनायां विष्णुकुमारादयो दृष्टान्ताः अभ्यूह्य वाच्याः साधर्म्यवैधर्म्याभ्यां यथायोगं, अत्र विस्तरभयान्न लिखिता इति, नात्र दोषो वाच्यः, यतो दिग्दर्शनमात्रमेतत्। "जह खीरमिस्समुदयं हंसो मोत्तूण खीरमाइयइ। तह उज्झिऊण अगुणे गुणा गुणवया गहेयव्वा (वेज्जा) ॥१॥" सुजनस्यैतच्च कथ्यते,

"सद्देसे विआणं, पुव्वकईणं च जं कयं कव्वं । नियमहिलाण य रूवं तिन्निवि लोए न अग्घंति ॥१॥ अष्टमं द्वारं भङ्गरूपमाह–

**सम्मत्तं पत्तंपिहु रोरेण निहाणगं व अइदुलहं । पावेहिं अंतरिज्जइ पढमकसाएहिं जीवस्स ॥ १९ ॥**

सम्यक्त्वं–हेतुस्वरूपभावनात्मकं सूक्ष्मावबोधरूपं प्राप्तमपि–अवाप्तमपि अतिदुर्लभम्–अनादौ संसारे परिभ्रमताऽतीव दुष्प्रापमपि रोरेण–रंकेण निधानकमिव–रत्नादिभृतभाजनमिव पापैः प्रथमकषायैः–अनन्तानुबंधिभिः 'अंतरिज्जइ' त्ति अपनीयतेऽभावरूपतामापाद्यते, शुद्धजीवस्य सम्यक्त्वोपगमनेन निर्मलस्यापि, अभ्रकादिभिः भास्करज्योत्स्नेवेति । ननु सम्यग्दृष्टिरपनीयते सम्यक्त्वम्, अपायसद्द्रव्यापगमेन तस्य सद्भावात्, उक्तंच–" आभिणिबोहिमवायं वयंति तप्पच्चयाओ सम्मत्तं । जा मणपज्जवनाणं सम्मद्दिट्ठीओ केवलिणो ॥१॥ आभिणिबोहियभेओ तइय अवाउ दंसणं च तप्पभवं । सो पुण खओवसमिए ते भावा नत्थि केवलिणो ॥ २ ॥ " एवं च सम्मत्तमिति औपशमिकं सम्यग्दर्शनमेव सम्भाव्यते 'मोहस्सेव उवसमो' इति वचनात्, सत्यमेतत्, न स्वावरणापेक्षया औपशमिकं सम्यग्दर्शनमित्यत्र बहु वक्तव्यं यथा गन्धहस्तिनि इति ॥ साम्प्रतं नवमभेदं भावनारूपमाह–

**मिच्छत्तकारणाइं करेंति नो कारणेऽवि ते धन्ना । इय चिंतेज्जा मइमं कत्तियसेट्ठी उदाहरणं ॥ २० ॥**

मिथ्यात्वकारणानि—अन्यतीर्थिकृतदेवप्रणामपूजादानादीनि कुर्वन्ति न कारणेऽप्युत्पन्ने राजादिजनिते धन्यास्ते–मतिमन्तः–पुण्यभाज इति चिंतयेद्–एतद्भावयेत्, मतिमान्–बुद्धिमान् कार्त्तिकश्रेष्ठी उदाहरणं–कार्तिकवणिग् दृष्टान्त इति गाथासमासार्थः ॥ व्यासार्थः कथानकगम्यः, तच्चेदम्—

हत्थिणाउरे जियसत्तू राया, कत्तिए सेट्ठी नेगमट्ठसहस्सपढमासणिए, अड्ढे दित्ते अपरिभूए आओगपओगसंपउत्ते बहुजणस्स संमए समणोवासए अहिगयजीवाजीवे उवलद्धपुन्नपावे आसवसंवरनिज्जरकिरियाहिकरणबंधमोक्खकुसले असहिज्जदेवासुरकिन्नरकिंपुरिसमहोरगगंधव्वगाइएहिं निग्गंथाओ पावयणाओ अणइक्कमणिज्जे, निग्गंथे पावयणे निस्संकिए निक्कंखिए निव्वितिगिच्छे, निग्गंथे पावयणे लद्धट्ठे गहियट्ठे अभिगयट्ठे अट्ठिमिंजपेम्माणुरागरत्ते, अयमाउसो ! निग्गंथे पावयणे अट्ठ परमट्ठे, सेसे अणट्ठे, ओसियफलहे अवंगुयदुवारे चियत्तंतेउरपरघरपवेसे बहूहिं सीलव्वयगुणव्वयवेरमणपच्चक्खाण-पोसहोववासेहिं अप्पाणं भावेमाणो विहरइ, समणे य निग्गंथे फासुएसणिज्जेण असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबल-पायपुंछणेणं पीढफलगसेज्जासंथारएणं ओसहभेसज्जेण य पडिलाभेमाणे विहरइ, अट्ठमिचाउद्दसिउद्दिट्ठपुन्निमासिणीसु पडिपुन्नं पोसहं सम्मं अणुपालेमाणे विहरइ । बीओ य गंगदत्तो तत्थेव नयरे परिवसइ, सोऽवि अप्पणो परिवारस्स आहेवच्चं जाव विहरइ, जाव मुणिसुव्वयसामीसमीवे पव्वइउं पुव्वामेव जाव महासुक्के कप्पे उववन्नो । तेणं कालेणं तेणं समएणं तत्थेव नयरे एक्को परिवायगो चिट्ठइ, सो य मासे मासे खमइ, तेण य सव्वलोगो आउट्टाविओ, सो जया हट्टमग्गेण नयरं पविसइ मिच्छादिट्ठी सव्वलोगो आढाइ, नवरं कत्तियसेट्ठी न अब्भुट्ठेइ, तओ सो पओसमावन्नो, अन्नया कयाइ राइणा ( परिवायओ भोयणत्थं निमंतिओ, जइ कत्तिओ परिवेसेइ तो पारेमित्ति वुत्ते राया ) सयमेव गओ, अब्भुट्ठिओ कत्तिएण, आसणेण निमंतिओ, ततो परिवायगवुत्ततो सव्वो कहिओ, कत्तियसेट्ठिणा भणियं—न वट्टए ममं एयं काउं, किंतु तुम्ह वासि वसामोत्ति जं भणह तं करेमोत्ति, राइणा भणियं—एवं होउ, तओ भोयणवेलाए आगओ, सेट्ठी परिवेसेइ, परिवेसिओ तं तज्जेइ अंगुलीए, कत्तियसेट्ठीस्स य

अड्ढिई जाया, चिन्तइ य–गंगदत्तो जइया य पव्वइओ तइया जइ अहं पव्वइओ हुंतो तो न एवं विडंबणं पावंतो, असंजयअविरयस्स य परिवेसणाइ, एवं तस्स निव्विन्नस्स अन्नया कयाइ मुणिसुव्वयसामी विहरमाणो समोसरिओ, तएणं कत्तियसेट्ठी पयाए ण्हाए लद्धट्ठे समाणे वंदणवडियाए निग्गए, धम्मो सुओ, उट्ठेत्ता वंदइ, भणइ य–जाव जेट्ठं पुत्तं कुडुम्बे ठावेमि ताव तुज्झंतिए अगाराओ अणगारियं पव्वयामि, अविग्घं देवाणुप्पिया! मा पडिबंधं करेह, कत्तियसेट्ठी भगवओ मुणिसुव्वयसामिस्स पासाओ निगच्छइ, जेणेव सए गिहे तेणेव उवागच्छइ, सुबहुं भत्तपाणं उवक्खडावेइ, मित्तनाइनियगसंबन्धिपरियणं आमंतेत्ता भोयावेत्ता एवं वयासी–अहन्नं देवाणुप्पिया! निव्विन्नकामभोगो पव्वइउं इच्छामि, तुब्भे णं देवाणुप्पिया! किं ववसिस्सह?, तएणं तं निगमट्ठसहस्सं तं एवं वयासि–अम्हाणं देवाणुप्पिया! के अन्ने आलंबणे? तुज्झ मग्गं अणुलग्गिस्सामो, तए णं कत्तियसेट्ठी तं नेगमट्ठसहस्सं एवं वयासि–जइ एवं तो अप्पणो जेट्ठपुत्ते कुडुंबे ठावेत्ता ममंतिए खिप्पामेव पाउब्भवह, तए णं नेगमट्ठसहस्सं हट्ठतुट्ठं जेणेव सयाइं गिहाइं तेणेव उवागच्छंति जेट्ठपुत्ते कुडुम्बे ठावेइ, पुरिससहस्सवाहिणीसु सीयासु दुरुहंति, जेणेव कत्तियसेट्ठी जाव महया विन्देण हत्थिणाउरं नयरं मज्झंमज्झेण निगच्छंति, जेणेव सहसंबवणे उज्जाणे जेणेव मुणिसुव्वए अरहा तेणेव उवागच्छइत्ति। आलित्तए णं भंते! लोए० तं इच्छामो णं भंते! सयमेव पव्वावेउं सयमेव मुंडावेउं सयमेव सिक्खाविउं सयमेव आयारगोयरविणयवेणइयं जायामायावत्तियं धम्ममाइक्खिउं, तए णं मुणिसुव्वए अरहा तं नेगमट्ठसहस्सं सयमेव पव्वावेइ, एवं देवाणुप्पिया! गंतव्वं चिट्ठियव्वं निसीइयव्वं जाव अस्सिं चेव अट्ठे खणमवि न पमाइयव्वं जाव अणसणं ताव सव्वं भाणियव्वं, विस्तरभयान्न लिखितं, जाव सोहम्मे कप्पे सोहम्मवडेंसए

हत्थिणाउरे जियसत्तू राया, कत्तिए सेट्ठी नेगमट्ठसहस्सपढमासणिए, अड्ढे दित्ते अपरिभूए आओगपओगसंपउत्ते बहुजणस्स संमए समणोवासए अहिगयजीवाजीवे उवलद्धपुन्नपावे आसवसंवरनिज्जरकिरियाहिकरणबंधमोक्खकुसले असहिज्जदेवासुरकिन्नरकिंपुरिसमहोरगगंधव्वगाइएहिं निग्गंथाओ पावयणाओ अणइक्कमणिज्जे, निग्गंथे पावयणे निस्संकिए निक्कंखिए निव्वितिगिच्छे, निग्गंथे पावयणे लद्धट्ठे गहियट्ठे अभिगयट्ठे अट्ठिमिंजपेम्माणुरागरत्ते, अयमाउसो ! निग्गंथे पावयणे अट्ठे परमट्ठे, सेसे अणट्ठे, ओसियफलहे अवंगुयदुवारे चियत्तंतेउरपरघरपवेसे बहूहिं सीलव्वयगुणव्वयवेरमणपच्चक्खाण-पोसहोववासेहिं अप्पाणं भावेमाणो विहरइ, समणे य निग्गंथे फासुएसणिज्जेण असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबल-पायपुंछणेणं पीढफलगसेज्जासंथारएणं ओसहभेसज्जेण य पडिलाभेमाणे विहरइ, अट्ठमिचाउद्दसिउदिट्ठपुन्निमासिणीसु पडिपुन्नं पोसहं सम्मं अणुपालेमाणे विहरइ। बीओ य गंगदत्तो तत्थेव नयरे परिवसइ, सोऽवि अप्पणो परिवारस्स आहेवच्चं जाव वि-हरइ, जाव मुणिसुव्वयसामीसमीवे पव्वइउं पुव्वामेव जाव महासुक्के कप्पे उववन्नो। तेणं कालेणं तेणं समएणं तत्थेव नयरे एक्को परिवायगो चिट्ठइ, सो य मासे मासे खमइ, तेण य सव्वलोगो आउट्टाविओ, सो जया हट्टमग्गेण नयरं पविसइ मिच्छादिट्ठी सव्वलोगो आढाइ, नवरं कत्तियसेट्ठी न अब्भुट्ठेइ, तओ सो पओसमावन्नो, अन्नया कयाइ राइणा (परिवायओ भोयणत्थं निमंतिओ, जइ कत्तिओ परिवेसेइ तो पारेमित्ति वुत्ते राया) सयमेव गओ, अब्भुट्ठिओ कत्तिएण, आसणेण निमंतिओ, ततो परिवायगवुत्तंतो सव्वो कहिओ, कत्तियसेट्ठिणा भणियं–न वट्टए ममं एयं काउं, किंतु तुम्ह वासि वसामोत्ति जं भणह तं करेमो-त्ति, राइणा भणियं–एवं होउ, तओ भोयणवेलाए आगओ, सेट्ठी परिवेसेइ, परिवेसिओ तं तज्जेइ अंगुलीए, कत्तियसेट्ठीस्स य

अब्भिट्टि जाया, निताइ य-गंगदत्तो जइया य पव्वइओ तइया जइ अहं पव्वइओ हुंतो तो न एवं विडंवणं पावंतो, असंजयअविरयस्स य परिवेसणाइ, एवं तस्स निव्विन्नस्स अन्नया कयाइ मुणिसुव्वयसामी विहरमाणो समोसरिओ, तएणं कत्तियसेट्ठी पयाए कल्लाए लद्धट्ठे समाणे वंदणवडियाए निग्गए, धम्मो सुओ, उट्ठेत्ता वंदइ, भणइ य-जाव जेट्ठं पुत्तं कुडुम्बे ठावेमि ताव तुज्झंतिए अगाराओ अणगारियं पव्वयामि, अविग्घं देवाणुप्पिया! मा पडिबंधं करेह, कत्तियसेट्ठी भगवओ मुणिसुव्वयसामिस्स पासाओ निग्गच्छइ, जेणेव सए गिहे तेणेव उवागच्छइ, सुबहुं भत्तपाणं उवक्खडावेइ, मित्तनाइनियगसंबन्धिपरियणं आमंतेत्ता भोयावेत्ता एवं वयासी-अहन्नं देवाणुप्पिया! निव्विन्नकामभोगो पव्वइउं इच्छामि, तुब्भे णं देवाणुप्पिया! किं ववसिस्सह?, तएणं तं निगमट्ठसहस्सं तं एवं वयासि-अम्हाणं देवाणुप्पिया! के अन्ने आलंवणे? तुज्झ मग्गं अणुलग्गिस्सामो, तए णं कत्तियसेट्ठी तं नेगमट्ठसहस्सं एवं वयासि-जइ एवं तो अप्पणो जेट्ठपुत्ते कुडुंबे ठावेत्ता ममंतिए खिप्पामेव पाउब्भवह, तए णं नेगमट्ठसहस्सं हट्ठतुट्ठं जेणेव सयाइं गिहाइं तेणेव उवागच्छंति जेट्ठपुत्ते कुडुम्बे ठावेइ, पुरिससहस्सवाहिणीसु सीयासु दुरूहंति, जेणेव कत्तियसेट्ठी जाव महया विन्देण हत्थिणाउरं नयरं मज्झंमज्झेण निग्गच्छंति, जेणेव सहसंबवणे उज्जाणे जेणेव मुणिसुव्वए अरहा तेणेव उवागच्छइत्ति। आलित्तए णं भंते! लोए० तं इच्छामो णं भंते! सयमेव पव्वावेउं सयमेव मुंडावेउं सयमेव सिक्खाविउं सयमेव आयारगोयरविणयवेणइयं जायामायावत्तियं धम्ममाइक्खिउं, तए णं मुणिसुव्वए अरहा तं नेगमट्ठसहस्सं सयमेव पव्वावेइ, एवं देवाणुप्पिया! गंतव्वं चिट्ठियव्वं निसीइयव्वं जाव अस्सिं चेव अट्ठे खणमवि न पमाइयव्वं जाव अगसगं ताव सव्वं भाणियव्वं, विस्तरभयान्न लिखितं, जाव सोहम्मे कप्पे सोहम्मवडेंसए

विमाणे वत्तीसाए विमाणावाससयसहस्साणं अन्नेसिं च बहूणं देवाण य देवीण य अहिवई दोसागरोवमट्ठिइए उववन्ने, परिव्वायगोऽवि आभियोगियकम्मवसेण इंदस्स वाहणत्ताए देवे उववन्ने । तए णं से परिव्वायगे देवे विभंगनाणेणं जाणइ २ त्ता दो हत्थिरूवाइं (तओ सक्कोऽवि दो रूवाइं) करेइ, एवं जत्तियाइ सो सीसा (रूवा) इं करेइ तत्तियाइं सक्कोवि, जा वज्जेण हओ ओवट्टिउमाढत्तोत्ति ॥

मूलपादस्थिरत्वेन,पासादो नान्यथा स्थिरः। दर्शनस्यैव संस्थैर्ये,ज्ञानचारित्रसंस्थितिः ॥१॥ द्वारं मूलं प्रतिष्ठानमाधारो भाजनं निधिः। हेतुर्धर्म्मचतुष्कस्य, सम्यग्दर्शनमिष्यते ॥ २ ॥ मूलमाश्या निधिर्दीपो, द्वारं ज्योतिर्गमोऽवनिः। प्रतिष्ठा भाजनं हेतुः, सम्यक्त्वं श्रेयसां परम् ॥३॥ गुणतो दोषतश्चैव,लक्षणभेदतोऽपि च। पृथक् पंचविधं ज्ञेयं,सम्यक्त्वं दशधा त्रिधा ॥४॥ स्थैर्यमायतनासेवा,कौशलं जिनशासने । भक्तिः प्रभावना चेति, गुणाः सम्यक्त्वदीपकाः ॥५॥ शङ्का कांक्षा जुगुप्सा च, कुतीर्थिकपरिस्तवः। कुतीर्थिकोपासनेति, दोषाः सम्यक्त्वनाशकाः ॥ ६ ॥ मुक्तः शंकादिभिर्दोषैः, स्थैर्यादिगुणदीपनम् । सम्यक्त्वं धारयेच्छुद्धमिमान् हेतून् विचिंतयेत् ॥७॥ शमः संवेगनिर्वेदौ, तथा सत्त्वानुकम्पता । अस्तित्वबुद्धिः पदार्थेषु, दर्शनव्यक्तिलक्षणम् ॥ ८ ॥ औपशमं सास्वादं क्षयोपमशमं च वेदजम्। क्षयजं सम्यक्त्वं ज्ञेयं, पंचधा तत् समासतः ॥ ९ ॥ नैसर्गिकमुपदेशिकमाज्ञारुचिसूत्रबीजभेदेन । अभिगमविस्ताररुचिः क्रिया च संक्षेपधर्म्मरुचिः ॥ १० ॥ जीवाजीवाश्रवबंधा, मोक्षः संवरनिर्जरे । एतानि सप्त तत्त्वानि, भाव्यानीह महात्मभिः ॥ ११ ॥ धर्मस्य साधनोपायाः, सम्यग्दर्शनपूर्वकाः। शीलं तपः सुदानं च, यत्र शुद्धा च भावना ॥१२॥ नयाभिप्रायेण किंचिल्लिख्यते–समुत्थानेन गृहाद् सम्यग्दर्शनश्रवणार्थं, तथा वाचनया पठनलक्षणया, तथा लब्ध्या तदावरण·

कर्मसप्तकोपशमसमुत्थया, आद्यास्त्रयो नयास्त्रिप्रकारमपि सम्यग्दर्शनमिच्छन्ति, ऋजुसूत्रनयस्तु समुत्थानं व्यभिचारित्वान्नेच्छति, शब्दादयस्तु लब्धिमेवेच्छंति, उक्तं सम्यक्त्वं नवभेदम्, एतच्च गतोपूरकद्वारसद्वारं, भित्तिशुद्धौ चित्रशुद्धिवद्वा, तच्च शल्योद्धारे सति भवति, शल्योद्धारश्च सर्वातिचारस्मरणगुरुकथितप्रायश्चित्तवहनादिना–"पायच्छित्तस्स गुणा विराहणादोसवज्जणं पढमं । अणवत्थादोसनिवारणं च बीओ गुणो होइ ॥ १ ॥ पढमा (ए) चरमाइं दिट्ठंता हुंति वयसमारुहणे । जह मलणाइसु दत्ता मुद्दाइसु नेवमिट्ठंवि ॥ १२ ॥" इत्यादि, तानि च व्रतानि प्राणातिपातविरमणादीन्यतः प्रथमं प्राणातिपातविरतिव्रतं नवभेदं, तत्रापि प्रथमद्वारमाह–

द्विति सया तेयाला पाणइवाए पमाओ अट्ठविहो । पाणा चउराईया परिणामेऽट्ठुत्तरसयं च ॥ २१ ॥

द्वे शते त्रिचत्वारिंशदधिके प्राणातिपाते भेदानां, कथं ?–पृथिव्यादयो नव भेदा मनःप्रभृतिभिर्गुणिताः सप्तविंशतिः, ते च करणत्रयेण गुणिता एकाशीतिः, कालत्रयेण गुणिता त्रिचत्वारिंशे द्वे शते २४३ भेदानां, प्रमादस्त्वष्टविधः, उक्तं च– "अज्ञानं संशयश्चैव, मिथ्याज्ञानं तथैव च । रागद्वेषावनास्थानास्मृतिर्धर्मेष्वनादरः ॥ १ ॥ योगाः दुष्प्रणिधानं च, प्रमादोऽष्टविधः स्मृतः" । तेन योगात् प्रमत्तः स्यात् 'प्रमत्तयोगात् प्राणव्यपरोपणं हिंसे' ति, (त० ७-८) प्राणा इन्द्रियादयः —

इंदियबलऊसासाऽऽउ पाण चउ छच सत्त अट्ठेव । इगविगलऽसन्निसन्नी नव दस पाणा य बोद्धव्वा ॥ १ ॥

परिणामानामष्टोत्तरं शतं १०८, कथं ?, (आद्यं) 'संरम्भसमारम्भारम्भ३योगत्रयकृतकारितानुमति३कषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुर्भिश्चैकशः' इति (त० ६-९) वचनात्, तत्र संरम्भादयो योगत्रयेण गुणिता नव ३ पुनः करणादिभिर्गुणिताः २ सप्तविंशतिः,

पुनश्चतुर्भिः क्रोधादिभिर्गुणिता अष्टोत्तरं शतं, भेदानामिति गाथार्थः ॥ अधुना भेदद्वारमाह—

**दुविहो थूलो सुहुमो संकप्पारंभजो य सो दुविहो । सवराहि निरवराहो साविक्खो तहय निरविक्खो॥२२॥**

स च प्राणातिपातः द्विविधः–स्थूलः सूक्ष्मश्च, स्थूला द्वीन्द्रियादयः, सूक्ष्मास्त्वेकेन्द्रिया गृह्यन्ते, नतु सूक्ष्मनामकर्मोदयवर्त्तिनः, तेषां व्यापादनाभावात्, स्वयमायुष्कक्षयेण मरणात्, तथा स्थूलः प्राणातिपातोऽपि द्विविधः–संकल्पजः आरंभजश्च, संकल्पात्–मनःसंकल्परूपाज्जातः संकल्पजो, मारयाम्येन कुलिङ्गिन, आरंभजस्तु कृषिकरणरंधनाद्यारंभप्रवृत्तस्य द्वीन्द्रियादिव्यापादनं, न तस्मान्निवृत्तिः । संकल्पजोऽपि द्विविधः–सापराधो निरपराधश्चेति, निरपराधान्निवृत्तिः, सापराधे तु गुरुलघ्वालोचनं, सापेक्षः निरपेक्षः, क्रियायां सर्वत्र सापेक्षेण भवितव्यमिति गाथार्थः ॥ तृतीयद्वारमाह—

**सम्मत्तम्मिवि पत्ते बीयकसायाण उवसमखएणं । तव्विरइपरिणामो एवं सव्वाणवि वयाणं ॥ २३ ॥**

सम्यक्त्वेऽपि–सम्यग्दर्शनेऽपि 'प्राप्ते' लब्धे 'द्वितीयकषायाणां' अप्रत्याख्यानाभिधेयानामुपशमक्षयेण क्षयोपशमेनेत्यर्थः, 'तद्विरतिपरिणामः' प्राणातिपातविरतिपरिणामो जायते, एवं शेषाणामपि मृषावादादिव्रतानां प्राप्तिः द्वितीयकषायाणां क्षयोपशमेनैव जायत इति गाथार्थः ॥ चतुर्थं द्वारमाह—

**पाणाइवायअनियत्तणंमि इहलोयपरभवे दोसा । पइमारिया य एत्थं जत्तादमओ य दिट्ठंता ॥ २४ ॥**

प्राणातिपातानिवृत्तानामिहलोकपरलोकयोर्दोषा भवंति, पतिमारिका चात्र यात्रादमकश्च दृष्टान्त इति गाथार्थः ॥ भावार्थः कथानकगम्यः, तच्चेदम्—

कश्चिदुपाध्यायो वृद्धः भार्या च तरुणी, स चान्यदोपाध्यायमुक्तवती—यथाऽहं वैश्वदेवबलिकाले काकभयाद्रक्षणीया, तेन च छात्रा व्यापारिता यथा वारंवारेण काकभयाद्रक्षणीया भवद्भिः भट्टिनी येन सुखेन बलिविधानं करोति, अन्यदा एकस्तस्य छात्रो विदग्धस्तेन चिंतितं—नेयमतिमुग्धा, किंतु वैशिकमेतत्, तेन च तस्याहोरात्रं गत्यागतिर्निरीक्षिता यावद्विकालवेलायां घटकं गृहीत्वो-दकानयनाय नर्मदां प्रति प्रस्थिता, छात्रश्च पृष्ठतो लग्नो यावत् कच्छोटकबंधनं कृत्वा पराङ्मुखं घटं गृहीत्वा तरितुं (तरीत्वा) पिंडारसमीपे गत्वा रंत्वा आगच्छन्त्या चौराः कुतीर्थेनागच्छंतः शुंसुमारेण गृहीता अक्षिढौकनद्वारेण मोचिताः, तच्च छात्रेण रात्रि-विलसितं सर्वं काकरक्षणवेलायां ज्ञापितं, ततस्तया प्रोक्तं—युष्मद्विरहे एतदनुष्ठितं, तेन प्रोक्तं—उपाध्यायस्यापि न लज्जसे, तया चिंतितं—उपाध्यायं व्यापादयामीति संचिन्त्य व्यापादितः, पिटिकायां कृत्वा परिस्थापनार्थमटव्यां गता, कुलदेवतया च मस्तके स्तम्भिता पिटिका, कतिचिद्दिनानि नीत्वा अटव्यां ततो बुभुक्षिता सती पत्तनं प्रति भिक्षार्थं लज्जां त्यक्त्वा गता, रुदंती भणि-तुमारब्धा—देहि भिक्षां पतिमारिकायाः, गृहे गृहे पर्यटति, कियता कालेन तत् कर्म्म क्षयोपशमं गतं, साध्वीं संमुखां दृष्ट्वा चिंति-तमनया—विरक्तकामभोगा सुखेन तिष्ठत्येषा, मया पुनः पापिष्ठया इहपरलोकविरुद्धमीदृशमनुष्ठितं, पादयोः पतितुकामायाः पिटिका भूमौ तत्क्षणादेव निपतितेति ॥ द्वितीयकथानकम्—

कश्चिद्रंको यात्रायां गतवति लोके वैभारपर्वतासन्नवनोद्याने पत्तने न कश्चिद्रक्षपालादि भिक्षां प्रयच्छति, वक्ति च यथो-द्याने गतः सर्वोऽपि लोकः, पश्चादुद्याने गतो, यावल्लोका भुक्त्वा प्रेक्षणकादिव्यग्रास्तिष्ठंति स्म, न कश्चिदुत्तरमपि ददाति, सच बुभुक्षितत्वात् क्रुद्धः, पर्वतोपर्यारुह्य शिलां पातयितुमारब्धः, तया च स एव व्यापादितो, लोको नष्ट इति, स च रौद्रध्यानो मृत्वा

नरके दुःखभाजनं संवृत्त इति संक्षेपार्थः ॥ अधुना पंचमं द्वारं गुणरूपमाह—

जे पुण वहविरइजुया उभओ लोगेऽवि तेसि कल्लाणं । जह सूवगहियदारगदामन्नगमाइयाणं च ॥२५॥

ये पुनः प्राणिनो 'वधविरतियुता' वधनिवृत्तिसमन्विता 'उभयलोकेऽपि' उभयलोकयोः—इहपरलोकयोस्तेषां कल्याणं जायते, तेषां (कल्याण) परम्परा जायते इति, दृष्टान्तद्वयमत्र, यथा सूपकारगृहीतश्रावकदारकः दामन्नकश्च, आदिशब्दात् क्षेमादयश्चेति संक्षेपार्थः ॥ विस्तरार्थः कथानकगम्यः, तच्चेदं—

वणिक्श्रावकपुत्रः कश्चिच्चौरैरपहृत्योज्जयनीं नीत्वा राजसूपकारहस्ते विक्रीतः, स च तेनोक्तो-लावकान् उच्छ्वासय, तेन पंजरान् मुक्ताः, तेनोक्तं—वधं कुरु, स च तूष्णींभावेन स्थितः, पुनः पुनरुच्यमानोऽपि यदा न करोति वधं ताडितः, ततो रोदितुमारब्धः करुणं, राज्ञा च वातायनस्थितेन श्रुतं दृष्टं च, ज्ञातः सर्वोऽपि वृत्तान्तस्ततो राज्ञश्चित्तमध्ये महान् संतोषः संजातः, तथापि परीक्षार्थं हस्तिना मारयित्वा व्यापादयध्वं इत्युक्तेऽपि राज्ञा तथापि निर्भयो वदति यं—प्राणात्ययेऽपि न पंचेन्द्रियादिवधं करोमि, ततो राज्ञोक्तं—मम दीयतामेषः, शरीररक्षकः कृतो, जीवनोपायो दत्तो, लोकपूज्यः संजातो नृपपूजितत्वाद्, अतः प्राणिवधनिवृत्तेर्गुण इति प्रथमं कथानकम् । द्वितीयं कथानकम्—

कश्चिन्मात्सिकः जलाशयात् माघमासे उत्तीर्णो निकटवर्तिनं श्रमणक्षमातापनां कुर्वाणं ददर्श अप्रावरणः, स चानुकम्पया जालं तस्योपरि क्षिप्तवान्, गतश्च स्वगृहं, स च रजन्यां शीतार्त्तः पुनः साधुं स्मरति स्म, मम वैश्वानरे निकटवर्त्तिनि वीजने च पलालसंस्तारके च तथाप्यतिशीतं, स च कथं रजनीं यापयिष्यति ?, प्रभातसमये च गतः साधुसमीपं यावद् दृष्टः

दर्शनमभूत्, ततो गीतिकाश्रवणं संजातं, यथा 'अणुपुंखमावहंता वि अनत्था तस्स बहुगुणा हुंति। सुहदुक्खकच्छपुडओ जस्स कयंतो वहइ पक्खं ॥ १ ॥' तत् श्रुत्वा लक्षेण द्रव्यममादो, द्वितीयवारायां द्वितीयलक्षं, तृतीयवारायां च लक्षत्रयरूपां दानप्रवृत्तिं श्रुत्वा राजा आहूतः, पृष्टः किमर्थं लक्षत्रयदानं?, तेन सविस्तरं आत्मपुण्याधिकत्वमावेदितमेवेति ॥ आदिशब्दोपात्तः क्षेमस्तु पाटलिपुरे जितशत्रोरमात्यः, शत्रुप्रपञ्चेन तत्पुरुषाणामभिमरतायां वध्यतया निर्देशः, वध्येन वाप्याः पद्माकर्षणमिति नियमात् स पंचपरमेष्ठि जपन् देवसान्निध्येनागतस्य मकरस्य पृष्ठ आरुह्योत्पलानि लात्वाऽऽगतः, तुष्टो राजा वरदानं, निवार्यमाणोऽपि प्रवव्राज ॥ अधुना यतनालक्षणं षष्ठं द्वारमाह—

**पाणाइवाए जयणा दारुयधन्नाइउदयविसयाओ। तसजीवे रक्खंतो विहिणा गमणाइयं कुज्जा ॥ २६ ॥**

'प्राणातिपाते यतना' वधनिवृत्तौ कृतायां सत्यां 'यतना' त्रसरक्षणात्मिका, संसक्तकाष्ठादिफलपत्रोदकादिविषया इंधनपचनगमनादिषु यथाशक्तिरूपा वा, उक्तंच—"जयणा उ धम्मजणणी जयणा धम्मस्स पालणी चेव। तव्वुड्ढिकरी जयणा एगंतसुहावहा जयणा ॥ १ ॥ जयणाए वट्टमाणो जीवो सम्मत्तनाणचरणाणं। सद्धाबोहासेवणभावेणाराहगो भणिओ ॥ २ ॥ रागदोसविउत्तो जोगो सद्धस्स होइ जयणा उ। रागद्दोसाणुगओ जो जोगो सो अजयणा उ ॥ ३ ॥ सर्वथा यथा त्रसकायरक्षा भवति तथा निरीक्ष्य गमनादि विधेयम्, एकेन्द्रियविषयापि हरितादिसम्बन्धिनी यतना वाच्येति गाथार्थः। अधुनाऽतिचारमाह—

**वहबंधछविच्छेयंअइभारनिरोहभत्तपाणेसु। पढमवयस्सऽइयारा कोहादीहिं न उ करेज्जा ॥ २७ ॥**

अन्यदा श्रेष्ठी गोकुले गतोऽकालवेलायामश्वादिकान् पश्यन् यावत् वत्सरूपैः सहागच्छन् दामन्नको दृष्टः, चिन्तितमनेन-कथमेष दामन्नकः ? कथितः सर्वोऽपि वृत्तान्तः, ततः समुद्रदत्तश्चिन्तयामास-किं मम गृहस्वामी एष भविष्यति ?, पुनरपि मारणापायं रजन्यां चिंतितवान्, यावत् पुनरस्य सागरदत्त प्रेषयामि लेखं दत्त्वा, लिखितश्च लेखः-तदर्थश्चायम्-अधौतपादस्यास्य विषं दातव्यं, प्रभाते लेखं गृहीत्वा स प्रस्थितः पत्तन, निकटवर्त्तिन्युद्याने गत्वा प्रसुप्तः, तद्दुहिता तस्मिन्नुद्याने देवपूजार्थं आगता, तद्गलके लेखं पश्यति सागरदत्तनाम्ना, अतिचपलतया वाचयित्वा विषा दातव्या अक्षिकज्जलेन कृत्वा संवर्त्तितो लेखः, तस्यास्तदेव नाम, उत्थाय गतो, लेखं ढौकितवान्, यावल्लेखार्थोऽवधारितः, सत उपाध्यायपार्श्वं गत्वा निरूपितं लग्नं यावदद्यार्द्ध रात्रे शुद्धयत्येवं वर्षद्वये नचेति, वरप्राप्ता च विषाचेटी, ततो गान्धर्वः विवाहः कृतः, श्रेष्ठी प्रभाते आगतः, यावत् परिणीतः दामन्नकेन, जामातृकः संवृत्तः तथापि चित्रशालिकायां गत्वा चिंतितवान्-कथमेष मदीयगृहस्वामी भविष्यति ?, तथाप्यस्तु, पुरागतः पुनरपि डोंबः उपचारेणाभ्युपगमं कारापितो मारणाय, स जामातृको विकालवेलायां प्रेषितः, सागरदत्तेन च तत्पुत्रेण भगिनीपतिः हट्टव्यवस्थितेन गच्छन् अकाले दृष्टः, ततस्तं वीथ्यां संस्थाप्यात्मना चण्डिकायाः पूजनार्थं गतः, तेन डुम्बेन दुःखव्यवस्थितेन वाणेन विद्धः, आराडाकरणं लोकागमनं च, पारंपर्येण समुद्रदत्तवणिजा श्रुतं, चलितो लोकापवादतः यावद्वीथ्यामुपविष्टं पश्यति, दामन्नकं कथितं तेन-यथा मम बलात्कारेण सागरदत्तो गतः चंडिकापूजनार्थं, एतद्वचः श्रुत्वा हृत्संघट्टेन मृतः, राज्ञा न पुत्र इति तस्यैव दामन्नकस्य गृहसारं सर्वं समर्पितं, पत्न्या त्वनुरक्तया पितुर्लेखोदितं विषं दातव्यमित्यादि कथितं, शेषं तेनैवोहितं सर्वमेतत् मद्वधाय श्रेष्ठिना कृतं, अथान्यदा पूर्वप्रेषितानि श्रेष्ठिना बोहित्थान्यागतानि, ततो गच्छतोऽर्द्धपथेन

दर्शनमभूत्, ततो गीतिकाश्रवणं संजातं, यथा 'अणुपुंखमावहंता वि अनत्था तस्स बहुगुणा हुंति । सुहदुक्खकच्छपुडओ जस्स कयंतो वहइ पक्खं ॥ १ ॥' तत् श्रुत्वा लक्षेण द्रव्यप्रमादो, द्वितीयवारायां द्वितीयलक्षं, तृतीयवारायां च लक्षत्रयरूपां दानमदानि श्रुत्वा राज्ञा आहूतः, पृष्टः किमर्थं लक्षत्रयदानं ?, तेन सविस्तरं आत्मपुण्याधिकत्वमावेदितमेवेति ॥ आदिशब्दोपात्तः क्षेमस्तु पाटलिपुरे जिनशत्रोरमात्यः, राजुमपश्चेन तत्पुरुषाणामभिमरतायां वध्यतया निर्देशः, वध्येन वाप्याः पद्माकर्षणमिति नियमात् स पंचपरमेष्ठि जपन् देवसान्निध्येनागतस्य मकरस्य पृष्ठ आरुह्योत्पलानि लात्वाऽऽगतः, तुष्टो राजा वरदानं, निवार्यमाणोऽपि प्रवव्राज ॥ अधुना यतनालक्षणं षष्ठं द्वारमाह–

पाणइवाए जयणा दारुयधन्नाइउदयविसयाओ। तसजीवे रक्खंतो विहिणा गमणाइयं कुज्जा ॥ २६ ॥

'प्राणातिपाते यतना' वधनिवृत्तौ कृतायां सत्यां 'यतना' त्रसरक्षणात्मिका, संसक्तकाष्ठादिफलपत्रोदकादिविषया गमनागमनादिषु यथाशक्तिरूपा वा, उक्तं च–"जयणा उ धम्मजणणी जयणा धम्मस्स पालणी चेव। तव्वुड्ढिकरी जयणा एगंतसुहावहा जयणा ॥ १ ॥ जयणाए वट्टमाणो जीवो सम्मत्तनाणचरणाणं । सद्धापोहासेवणभावेणाराहगो भणिओ ॥ २ ॥ रागदोसविउत्तो जोगो सढस्स होइ जयणा उ । रागद्दोसाणुगओ जो जोगो सो अजयणा उ ॥ ३ ॥ सर्वथा यथा त्रसकायरक्षा भवति तथा निरीक्ष्य गमनादि विधेयम्, एकेन्द्रियविषयापि हरितादिसम्बन्धिनी यतना वाच्येति गाथार्थः । अधुनाऽतिचारमाह–

वहबंधछविच्छेयंअइभारनिरोहभत्तपाणेसु । पढमवयस्सऽइयारा कोहादीहिं न उ करेज्जा ॥ २७ ॥

'वधः' लकुटादिघातः 'बन्धः' रज्ज्वादिना संयमनं 'छविच्छेदः' कर्णकर्त्तनादिभिः 'अतिभारारोपणं' वलीवर्दादिषु पूगीफलाद्यतिरिक्तभारचटापनं निरोधः भक्तपानविषयः यत् क्षुधाद्यार्त्तः कदाचिन् म्रियते, एते त्वतिचाराः क्रोधादिदूषितस्य भवंति, गुणार्थं तु द्विपदचतुष्पदादीनां च बन्धनादि कुर्वतोऽतिचारा न भवंतीति गाथार्थः, विस्तरार्थोऽणुव्रतविधाविति । अष्टमं द्वारं भंगरूपमाह—

**बंधाईणि उ आउट्टियाइणा जइ करेज्ज तो भंगो । बीयकसयाणुदए तिव्वाणं होइ सड्ढस्स ॥ २८ ॥**

वधबन्धादीन्याकुट्टिकया निरपेक्षो यदा कुर्यात्तदा 'भंगः' चतुर्थस्थानवर्त्यारंभरूपः प्राणातिपातव्रतस्यैवं जायत इति,' द्वितीयकषायाणाम्' अप्रत्याख्यानावरणानामुदयेन—अनुभवेन तीव्राणाम् उत्कटानां भंगरूपाणामित्यर्थः भवति श्राद्धस्य जायते श्रावकस्य देशविरतस्येति गाथार्थः । अधुना चरमं भावनाद्वारमाह—

**पणमामि अहं निच्चं आरंभविवज्जियाण विमलाणं । सव्वजगज्जीवरक्खणसमुज्जयाणं मुणिगणाणं ॥ २९ ॥**

'प्रणमाम्यहं' नमस्करोम्यहं 'नित्यं' सदा 'पृथिव्याद्यारम्भविवर्जितानां' पृथिव्याद्यारंभपरित्यागिनां 'विमलानाम्' अन्तः क्रोधाद्यभावतः, रक्षणे मलरहितानामित्यर्थः, सर्वे ये जगति—लोके जीवाः—सूक्ष्मबादरादिभेदभिन्नास्तेषां भावतः रक्षणे—पालने समुद्यतानाम्—उद्युक्तानां 'मुनिगणानां' साधुसंहतीनामित्येवं प्रथमव्रतभावना त्रिकालं भावनीयेति गाथार्थः ॥ उक्तं नवभेदं प्राणातिपातविरतिरूपमणुव्रतं प्रथमं, साम्प्रतं द्वितीयं मृषावादविरत्याख्यमारभ्यते, तत्रापि प्रथमं द्वारमाह—

**अन्भूयं उब्भावइ भूयं निन्हवइ तह य विवरीयं । गरिहा सावज्जं वा अलियं एमाइविसयं तु ॥ ३० ॥**

अभूतोद्भावनं नाम यथा श्यामाकतन्दुलमात्र आत्मा, ललाटदेशस्थः हृदयस्थः सर्वलोकव्यापी वा, अथवा एक आत्मा जलचन्द्रवदनेकधा दृश्यते इत्यादि, भूतनिन्हवो नास्त्यात्मा नास्ति परलोकयायी आत्मा, तथा विपरीतं गामश्वं ब्रुवतः, यद्वा अनित्य आत्मा बौद्धमतात् नित्यो वा सांख्याभिप्रायेण, गर्हावचनं काणः कुब्जः दास इत्यादि, 'सावद्यं' सपापं वा, यथा दम्यंतां गोरथकाः, अन्यद्वा यत् सपापं, उक्तं च–" यद्भावदोषवद्वाच्यं, तत्त्वादन्यत्र वर्तते । सावद्यं वापि यद्वाच्यं, तत् सर्वमनृतं विदुः॥१॥" तथा येन आत्मनः परस्य अतीवोपघातोऽतिसंक्लेशो वा तत् सर्वमनृतम्, एवमाद्यनृतस्वरूपमिति गाथार्थः ॥ भेदद्वारं द्वितीयमाह–

**कन्नागोभूमालियनासवहारं च कूडसक्खिज्जं । भेया उ तस्स पंच उ हवंति एए जिणुद्दिट्ठा ॥ ३१ ॥**

तत्र कन्यानृतं नाम–कन्याविषयमलीकवचनं, यथा भिन्नकन्यां अभिन्नकन्यां अभिन्नकन्यां वा भिन्नकन्यां ऋतौ विपरीतां वा. उपलक्षणं कुमारादेः, गवानृतं नामाल्पक्षीरां बहुक्षीरां विपरीतं वा, महिष्याद्युपलक्षणं, भूम्यनृतं नाम परकीयामात्मसत्कामात्मसत्कां वा परकीयां वक्ति, न्यासकापलापनं नाम यथा पुरोहितेन द्रमकसम्बन्धी दीनारनकुलो गृहीत्वा अपलप्तः, पुनः राज्ञा नामांकितमुद्रादापनेन पुत्रादानादितः समर्पितश्च, कूटसाक्षित्वं नाम यथा कश्चिदर्थलोभेन व्यवहारे नियुक्तः कूटसाक्षित्वं प्रयच्छत्येवमेतदिति भेदाः गृहणादयः पंचैव भवन्ति 'एते' अनन्तरप्रतिपादिताः 'जिनोद्दिष्टाः' जिनकथिता इति गाथार्थः ॥ 'यथा जायते' यथा ग्रहणं भवति द्विविधत्रिविधादिना प्रकारेण तथा प्रकारं तृतीयद्वारेणाह–––

**दुगतिगदुगदुगएक्कगेण एगेण होइ तिविहं तु । इगदुगइगएक्केणं वयाण एसेव गहणविही ॥ ३२ ॥**

करणकारणद्विविधत्वेन मनोवाक्कायत्रिविधत्वेन, भगवत्यादौ प्रतिपादितो भंगकः त्रिविधत्रिविधेन स विषयविभागेन ज्ञेयः, कस्यचिच्छ्रावकस्य कस्यांचिदवस्थायां कस्मिंश्चिद्वस्तुनि कस्मिंश्चित् क्षेत्रादौ इति न सर्वत्र, भङ्गकाश्च षट्केनैकविंशतिः, नवकेनैकोनपंचाशत् ४९, पंचव्रतविभागेन द्वादशव्रतविभागेन वानेकाः कोट्यः श्रावकव्रतग्रहणभेदानाम्, उक्तं च–"एगवए छब्भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय पयवुड्ढीए सत्तगुणा छज्जुया कमसो ॥१॥ एगवीसं खलु भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय बावीसगुणा बावीसं पक्खिवेयव्वा ॥१॥ एगवए नव भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय दसगुण काउं नव पक्खेवंमि कायव्वा ॥ १ ॥ संयोगसंख्या च–' उभयमुहं रासिदुगं हेट्ठिल्लाणंतरेण भय पढमं । लद्धहरासिविभत्ते तमुवरिगुणं तु संजोगा ॥१॥ इत्यनया गाथया गुणकारभागहारक्रमेणागतफलद्वारेण चिन्तनीया च, सर्वव्रतसंख्या च–तेरसकोडिसयाइं चुलसीइजुयाइं बारस य लक्खा । सत्तासीइ सहस्सा दो य सया तह दुरग्घा य ॥१॥ " अत्र च ग्रन्थविस्तरभयान्न लिखिता इति । एवं भंगकस्वरूपपरिज्ञानपूर्वकं सर्वव्रतानि ज्ञात्वा आत्मीयस्वभावालोचनादिना प्रकारेण ग्राह्यानि, ज्ञात्वा अभ्युपेत्याकरणमिति वचनाद्, उक्तं च–" सीयाल भंगसयं जस्स विसोहीएँ होइ उवलद्धं । सो खलु पच्चक्खाणे कुसलो सेसा अकुसला उ ॥ १ ॥" व्रतानामेष एव ग्रहणविधिरिति गाथार्थः ॥ दोषरूपं चतुर्थद्वारमाह––

अलियं च जंपमाणो मूगत्ताईणि लहइ दुक्खाणि । जायइ तहेह निहणं वसुराया एत्थुदाहरणं ॥ ३३ ॥

' अलीकं जल्पन् ' अनृतं ब्रुवन् मूकत्वादीनि ' लभते ' प्राप्नोति ' दुःखानि ' असातोदयरूपाणि, उक्तं च "मूका जडाश्च विकला, वाग्घीना वाग्जुगुप्सिताः । पूतिगन्धमुखाश्चैव, जायंतेऽनृतभाषकाः ॥१॥" तथेह लोके जिह्वाच्छेदादिना

निधनत्वं याति, दृष्टान्तमाह—वसुराजवदिति गाथार्थः ॥ भावार्थः कथानकगम्यस्तच्चेदम्—

पृथिवीप्रतिष्ठिते नगरे जितशत्रो राज्ञः पुत्रो वसुराजा, क्षीरकदंबोपाध्यायः, पुत्रः पर्वतकः, नारदश्चैते सहाध्यायिनः, अन्यदा क्षीरकदंबोपाध्यायः पंचत्वमुपगतः, वसुराजः राजा संवृत्तः, पर्वतकनारदयोश्च धर्मविचारे विवादः संजातोऽजैर्यष्टव्यमित्यत्र, पणश्च कृतो जिह्वाछेदेन, पर्वतकेन छागा नारदेन त्रिवार्षिकाणि धान्यानि अजा इति क्षीरकदंबोपाध्यायेन व्याख्यातमित्युक्तं, तत्र वसुराजा प्रमाणीकृतः. ज्ञातं च तत् क्षीरकदम्बकपत्न्या पर्वकमात्रा, तयोक्तं—मयापि श्रुतमासीदुपाध्यायवचनं त्रिवार्षिकाः धान्याः अजाः, तस्मादुत्यगमि वसुराजानमभ्यर्थयामि यथा मदीयपुत्रस्य जिह्वाछेदो न भवति तथाऽनृतमप्युक्त्वा कर्त्तव्यं, स च सत्यवादी क्रियेति लोकश्रुतिः, विप्रं चाकाशे, तेन चोक्तं मयाऽनृतभाषणं न विधेयं, ततः पुनः पुनः क्षीरकदम्बोपाध्यायपत्न्या प्रेर्यमाणेन प्रतिपन्नं तद्वचः, पर्वतनारदयोस्त्वागतकयोः राज्ञा छागविषयं प्रत्युत्तरं दत्तं, उपाध्यायव्याख्यानमेतत्, ततः आगनात् पतितो भुवि धिक्धिक्शब्दश्च लोके संजातः, ऋषिर्नारदस्तु लोके सत्यवादीति यशः प्राप्त इति, एवमादयोऽनेके दोषाः। साम्प्रतं पंचमं गुणद्वारमाह—

जे मिउ सच्चं जंपंति निउणयं सव्वसत्तहियजणगं। ते इह पुज्जा रिसिनारउव्व सुगइं पुणो जंति ॥ ३४ ॥

ये प्राणिनः 'मृदु' अकठोरं 'सत्यं' जनपदादिसत्यं 'जल्पंति' भाषंते 'निपुणं' षोडशविधवचनयुक्तं, 'सर्वसत्त्वहितजनकं' सर्वप्राणिसुखप्रापकं ते प्राणिन इह 'पूज्या' अर्चनीयाः ऋषिनारदवत् 'सुगतिं' स्वर्गादिकप्राप्तिलक्षणां पुनर्गच्छन्तीति। ऋषिनारदकथानकं दोषाधिकारे उक्तमेव ॥ अधुना षष्ठं यतनाद्वारमाह—

**बुद्धीपुव्वं काऊण जंपए अंधगोविव सचक्खू । अप्पाणंमि परंमी वज्जंतो पीडमुभओवि ॥ ३५ ॥**

'बुध्ध्या' मत्या 'पूर्वं' प्रथमं कृत्वा, पर्यालोच्य, भाषते अंधक इव सचक्षुषं, यथा अंधः सचक्षुषमग्रतः कृत्वा गमनादि करोत्येवमेषोऽपि वक्तव्यमालोच्येत्यर्थः, आत्मनि परस्मिन्नपि च 'वर्जयन्' परिहरन् 'पीडां' बाधामुभयोरपीति गाथार्थः । सप्तममतिचारद्वारमाह—

**सहसाअब्भक्खाणं रहसं च सदारमंतभेयं च । मोसुवएसं तह कूडलेहकरणं च वज्जिज्जा ॥ ३६ ॥**

सहसा-अपर्यालोचितमभ्याख्यानं, यथा चौरः संपारदारिको वा 'रहसं चे' ति रहसाभ्याख्यानं यथा केचन एकान्तस्थिता मंत्रयंति तत्र हि ब्रूते-एते राजविरुद्धादिकमेतन्मंत्रयंति, स्वदारमन्त्रभेदो नाम स्वकलत्रस्त्रमित्रादिविश्रब्धभाषितान्यकथनं, यथेदमनेन कथितं चेष्टितं वा, उष्ट्रलिंडकविक्रयप्रेषितवणिग्वत्, मृषोपदेशो नाम यथाऽनेन प्रकारेण परो वञ्च्यते, छलबुद्धिदानं, तथा कूटलेखकरणं नाम अन्यमुद्राक्षरविधानादिना अन्यथा लेखकरणं, यथा विषं दातव्यं, अधीयतां कुमार इत्यादि, अतिचारा मृषावादविषयास्तांश्च वर्जयेदिति गाथार्थः ॥ अधुना भंगद्वारमाह—

**अब्भक्खाणाईणि उ जाणंतो जइ करेज्ज तस्स भवे । भंगो पावस्सुदए मूलं सो सव्वदुक्खाणं ॥ ३७ ॥**

अभ्याख्यानादीन्यतिचाररूपाणि यद्याकुट्टिकया-उपेत्यकरणलक्षणया जानन् यदि 'करोति' विदधाति तस्य भवेद् भंगश्चतुर्थस्थानवर्त्ती 'पापस्योदये' क्लिष्टकर्मोदये, मूलं स 'सर्वदुःखानां' शारीरमानसानामिहपरलोकगतानामित्यर्थः ॥ साम्प्रतं नवमं भावनाद्वारमाह—

तेसिं नमामि पयओ साहूणं गुणसहस्सकलियाणं । जेसिं मुहाउ निचं सचं अमयंच पज्झरए ॥ ३८ ॥

तेषां साधूनां नमामीति क्रिया, 'प्रयतः' प्रयत्नवान् गुणा—मूलगुणउत्तरगुणलक्षणास्तेषां सहस्राणि—अष्टादशशीलाङ्गसहस्रलक्षणानि तैः कलितानां—तैः समन्वितानां, तेषां मुखाद्—वक्त्राद् 'नित्यं' सदा सत्यं चतुर्विधं वा अमृतमिव आह्लादकत्वात् 'पज्झरइ' त्ति निर्गच्छतीति भावनीयमिति गाथार्थः ॥ उक्तं मृषावादव्रतं द्वितीयं नवप्रकारं, साम्प्रतं अदत्तादानं तृतीयाणुव्रतं नवभेदमाह, तत्र प्रथमद्वारमाह—

सामीजीवादत्तं तित्थयरेणं तहेव गुरुएहिं । एयस्स उ जा विरई होइ अदत्ते सरूवं तु ॥ ३९ ॥

स्वामिना यद्वस्तु हिरण्यादि कमात्मीयं न दत्तं तद्दह्रिपंचनादिना गृहीतमदत्तादानं, जीवादत्तं तु यत् सचित्तं पश्वादि यदि मारणाय कस्यचित् दत्तं, तेनात्मीयाः प्राणा मारणाय येन न दत्ताः, सर्वस्य प्राणप्रियत्वाद्, तज्जीवादत्तमागमे पठितम्, उक्तं च–" जेसिं च ते सरीरा अविदिन्ना तेहिं जीवेहिं" तीर्थकरादत्तं नाम यदाधाकर्मादि स्वामिना दीयमानमपि तीर्थकरेणाननुज्ञातत्वात्तददत्तादानं, तथा शुद्धमपि यद् गुरुणाऽननुज्ञातं गृहते भुज्यते वा तद् गुर्वदत्तादानं, उक्तं चागमे–"सत्तविहालोयणविवज्जिए भुंजमाणस्स तेणया होइ" एतस्यादत्तादानस्य या विरतिः निवृत्तिः 'भवति' जायते, अदत्तादानस्यैतत् स्वरूपमिति गाथार्थः । भेदद्वारं द्वितीयमाह—

सचित्ताचित्तोभय दुपय चउप्पय तहेव अपयं च । जेण य चोरकारो विसओऽदत्तम्मि सो नेओ ॥ ४० ॥

सचित्तं गोमनुष्यधान्यादिकं अचित्तं मणीसुवर्णादिकं मिश्रं सोपस्काराश्वअलंकृतमनुजकंबलीकृतधान्यादि, तन्नवप्रकार-

मपि अदत्तादानं भेदतो, येन चौरशब्दः लोके प्रवर्त्तते स ' विषयः ' गोचरः श्रावकस्याणुव्रतविषयो ज्ञेयः-ज्ञातव्य इति गाथार्थः ॥ तृतीयद्वारमाह—

**गुणठ्ठाणयंमि तह परिणयंमि जीवस्स कुगइभीयस्स । वयगहपरिणामो च्चिय होइ दढं तिव्वसड्ढस्स ॥ ४१ ॥**

' गुणस्थानके ' देशविरतिलक्षणे ' तथा परिणते ' सम्यक्त्वलाभात् पल्योपमानां भावतः पृथक्त्वभागस्थितिमात्रे क्षपिते ' जीवस्य ' आत्मनः ' कुगतिभीतस्य ' अविरतिमूलकर्म्मबंधभीरोः ' व्रतग्रहणपरिणामः ' अदत्तादानव्रतग्रहणाध्यवसायो ' भवति ' जायते ' दृढम् ' अत्यर्थं ' तीव्रश्राद्धस्य ' उत्कटनिजाध्यवसायस्येति गाथार्थः ॥ दोषद्वारमाह—

**जे पुण करंति विरइं अदिन्नदाणस्स नेह लोभिल्ला । ते मंडियविजया इव चोरा पावंति दुक्खाइं ॥ ४२ ॥**

ये पुनः कुर्वंति ' विरतिं ' निवृत्तिं 'अदत्तादानस्य ' चौर्यरूपस्य नेति वर्त्तते, इह लोके-मनुष्यलोके ' लोभिल्ला ' चतुर्थकषायलोभवंतः ते पुरुषा मंडिकचौरवत् विजयचौरवद्वा प्राप्नुवंति ' दुःखानि ' शूलारोपणोद्बन्धनाद्यनेकाकाराणीति गाथार्थः ॥ व्यासार्थः कथानकगम्यस्तच्चेदम्—

उज्जयिन्यां नगर्यां जितशत्रू राजा, अचलः सार्थवाहः, मूलदेवो धूर्तः द्यूतकारः, देवदत्ता गणिका, सच मूलदेवस्यानुरक्ता, अचलसार्थवाहोऽपि देवदत्तायामेवानुरक्तः, प्रभूत द्रविणजातं प्रयच्छतीति वाइकाया ( कुट्टिन्या ) वल्लभः, अन्यदा देवदत्तायाः कुट्टिन्याश्च विवादः सजातः, देवदत्ताया मूलदेवो गुणवान् वाइकाया उदारवृत्तित्वादचलो गुणवान्, उक्तंच-" अपात्रे रमते नारी, धारा वर्षति माधवः । नीचमाश्रयते लक्ष्मीः, विद्वान् प्रायेण निर्द्धनः॥१॥" तथा गुणागुणपरीक्षार्थं दासचेडी प्रेपिता इक्षुभक्षणेच्छा-

अणुव्रतेषु मृषावाद विरतिः अदत्तादान विरतिश्च

कपटद्वारेण द्वयोरपि, ततः सार्थवाहेन शकटमिक्षुभृतमनुग्रहं मन्यमानेन प्रेषितं, देवदत्तया कृष्णं मुखं कृतं, मूलदेवेन चूतमध्यात्
कपर्दकान् दत्त्वा गृहीत्वा कपर्दकद्वयेनेक्षुयष्टि शरावद्वयं चतुर्जातकं चोद्धरितशेषैः गृहीत्वा भक्ष्ययोग्याः कृत्वा प्रेषिताः, ततः हृष्टमुखा
देवदत्ता, वाइकायाः कथितं-यथा पुरुषविशेषं पश्य, पुरुषविशेषो बुद्धिरूपः, यथाहं हस्तिन्यचलेन कृता न तथा, वाइका मूलदेवस्य
छिद्राण्यन्वेषमाना अचलेन सार्थवाहेन सार्द्धं कपटं कृतवती, यथा भाटिं परिपूर्णां दत्त्वा ग्रामगमनकारणं ज्ञापयित्वा पुनरागमनं
करिष्यसि, (तदा मूलदेव आगमनेनापराद्धो भविष्यति, स तथा कृत्वा गतः ) ततो देवदत्ताया मूलदेवं प्रत्याह्वानबुद्धिः सं-
पन्ना, आगतश्च सः, वाइकया सार्थवाहस्य ज्ञापितमागतः, तत्क्षणेन मूलदेवश्च पर्यंकाधस्तात् स्थितः, ज्ञापितं वाइकया, ततः
स्नानव्याजेनोदकार्द्रीकृतः केशैर्गृहीत्वा गलिकां निधाय पश्चात् मुक्तो, निर्गतो नगराद्, अपमानितश्चिन्तयामास—कोऽर्थं प्राप्य न
गर्वितो विषयिणः कस्यापदोऽस्तं गताः, स्त्रीभिः कस्य न खंडितं भुवि मनः को नाम राज्ञां प्रियः ? । कः कालस्य न गोचरा-
न्तरगतः कोऽर्थी गतो गौरवं को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ? ॥१॥ " ततः प्रवृत्तो गंतुं, गच्छतश्च टक्क उद्धड-
सहायस्य प्रहरद्वये भोजनवेलायां सक्तुपोट्टलिकां गृहीत्वा जलाशयं गतः, मूलदेवस्तत्वाशया दिनत्रयं गतः तेन सह, पृथक् भवन-
वेलायां मूलदेवेनोक्तः—दक्ष ! यथा मम राज्यलाभे त्वयाऽऽगतव्यं, भणित्वा ग्रामं प्रविष्टो भोजनाय, यावदेकस्मिन् गृहे कुल्माषान्
लब्ध्वा निर्गतो, मासोपवासी साधुरभिमुखो ग्रामं प्रवेष्टुकामो दृष्टः, चिंतितं चानेन, यथा कुल्माषदानेनाप्यहं पुण्योपार्जनं क-
रोमि इति सम्प्रधार्य दत्तं, पठितं च-" धन्नाणं खु नराणं कुम्मासा हुंति साहुपारणए " तिस्रो वाराः, ततो देवतया तद्गुणो-
पार्जितया उक्तं-यथा अर्द्धेन गाथाया याचस्व, तेन चोक्तं 'गणिया च देवदत्ता दंतिसहस्सं च रज्जं च " देवतयोक्तम्—अचिराद्

मपि अदत्तादानं भेदतो, येन चौरशब्दः लोके प्रवर्त्तते स 'विषयः' गोचरः श्रावकस्याणुव्रतविषयो ज्ञेयः-ज्ञातव्य इति गाथार्थः ॥ तृतीयद्वारमाह—

**गुणठ्ठाणयंमि तह परिणयंमि जीवस्स कुगइभीयस्स । वयगहपरिणामो च्चिय होइ दढं तिव्वसड्ढस्स ॥ ४१ ॥**

'गुणस्थानके' देशविरतिलक्षणे 'तथा परिणते' सम्यक्त्वलाभात् पल्योपमानां भावतः पृथक्त्वभागस्थितिमात्रे क्षपिते 'जीवस्य' आत्मनः 'कुगतिभीतस्य' अविरतिमूलकर्म्मबंधभीरोः 'व्रतग्रहणपरिणामः' अदत्तादानव्रतग्रहणाध्यवसायो 'भवति' जायते 'दृढम्' अत्यर्थं 'तीव्रश्राद्धस्य' उत्कटनिजाध्यवसायस्येति गाथार्थः ॥ दोषद्वारमाह—

**जे पुण करंति विरइं अदिन्नदाणस्स नेह लोभिल्ला । ते मंडयविजया इव चोरा पावंति दुक्खाइं ॥ ४२ ॥**

ये पुनः कुर्वंति 'विरतिं' निवृत्तिं 'अदत्तादानस्य' चौर्यरूपस्य नेति वर्त्तते, इह लोके-मनुष्यलोके 'लोभिल्ला' चतुर्थकपायलोभवंतः ते पुरुषा मंडिकचौरवत् विजयचौरवद्वा प्राप्नुवंति 'दुःखानि' शूलारोपणोद्बन्धनाद्यनेकाकाराणीति गाथार्थः ॥ व्यासार्थः कथानकगम्यस्तच्चेदम्—

उज्जयिन्यां नगर्यां जितशत्रू राजा, अचलः सार्थवाहः, मूलदेवो धूर्तः द्यूतकारः, देवदत्ता गणिका, सच मूलदेवस्यानुरक्ता, अचलसार्थवाहोऽपि देवदत्तायामेवानुरक्तः, प्रभूत द्रविणजातं प्रयच्छतीति वाइकाया (कुट्टिन्या) वल्लभः, अन्यदा देवदत्तायाः कुट्टिन्याश्च विवादः सजातः, देवदत्ताया मूलदेवो गुणवान् वाइकाया उदारवृत्तित्वादचलो गुणवान्, उक्तंच—" अपात्रे रमते नारी, धारा वर्षति माधवः । नीचमाश्रयते लक्ष्मीः, विद्वान् प्रायेण निर्द्धनः॥१॥" तया गुणागुणपरीक्षार्थं दासचेडी प्रेषिता इक्षुभक्षणेच्छा-

यावदीश्वरगृहे प्रविष्टमातं क्षात्रद्वारे निष्कासितमासीत् तन्मस्तके मूलदेवस्य दत्त्वा स्वयं पृष्ठतः खड्गव्यग्रकरः चलितो नगराद् बहिर्व्यवस्थितभूमिगृहाभिमुखं, उद्घाटितं भूमिद्वारं प्रविष्टश्च, तत्रैकाकिन्येका बालिका, तस्या आज्ञा दत्ता यथा प्राघूर्णकस्य पादप्रक्षालनं कुरु, कूपतटे उपवेशितः, पादशौचं कुर्वन्त्या अनुरागः संजातः, संज्ञितश्च तया—नश्य, स च मरणभयभीतो नष्टः, तस्य च शिलोद्घाटनवेलायां हाहारवः कृतः गतो गतः पुरुषो, यावद् खड्गं गृहीत्वा चलितः, नगरसमीपे निकटवर्त्तिनि चौरे निकुञ्जे स्तम्भान्तरे खड्गेन द्विधाकृतो स्तम्भः अन्धकारे, त्वरितं त्वरितं भूमिगृहाभिमुखं चौरो गतो, मूलदेवोऽपि राजभवनं प्राप्तः, चिन्तितं च—ईदृशोऽनेकव्यायामयुक्तः कथमारक्षिकैः प्राप्यते ?, प्रभातसमये मंडिकचौरः हट्टमार्गव्यवस्थितो गृहीतलकुटिरर्द्धमुखोद्घाटः सूचिकर्म कुर्वन् दृष्टः, परिज्ञातश्च मूलदेवेन, रजन्यां दीपेन तस्य मुखस्य दृष्टत्वात्, राजकुलमागतेन पुरुषाः प्रेषिताः, तैश्चानीतो, विजनं कृत्वा रजनीवृत्तान्तं पृष्टः, सा च कन्यका किं तव भवति ?, तेनोक्तं—मम भगिनी, मूलदेवेनोक्तं—मम दीयतां, दत्ता तस्मै, स मण्डिकः महत्तमपदे स्थापितः, सर्वाधिकारी कृतः, भाण्डागारादिप्रयोजनं सर्वं मंडिकस्य समर्पितं, उपचारेण गृहीत्वा सर्वं द्रव्यं तस्य सम्बन्धि क्षयं नीतं, पश्चान्निर्द्रव्यं ज्ञात्वा अनेकयातनाभिः पंचत्वं नीतः, विस्तरार्थं उत्तराध्ययनचतुर्थसंस्कृताध्ययनादवसेयः । एवं विजयचारकथानकं । चंपायां नगर्यां अनेकतालोद्घाटनीअवस्वापिनीचौरविद्यायुक्तो विजयतस्कर आसीत्, तेन च कस्यचिदीश्वरस्य गृहे दुःखारोहे प्रासादे क्षत्रं दत्तं पद्माकारं, संरक्षितं च, गृहे गत्वा प्रभाते स्नानविलेपनपुष्पताम्बूलाभरणवस्त्रालंकृतस्तथैव जनसमूहे सपुत्रस्तत्रैव समायातः, क्षत्रं पद्माकारं लघुद्वारं दुरारोहे प्रासादे दृष्ट्वा पुनः पुनरात्मीयं शरीरं परिभालयति पुत्रमुखादि, आरक्षिकपुरुषैरिंगिताकारैर्गृहीतः, पश्चाद् बाहोर्बद्ध्वा वध्यभूमिं नीत्वा अनेकया-

भविष्यति, ततो रजन्यां कार्पटिकमठे सुप्तेन स्वप्नः पश्चिमयामे दृष्टो, यथाऽऽदित्यः सहस्ररश्मिः मम मुखे प्रविष्टः, तत्क्षणाद्विबुद्धश्च, कार्पटिकेनाप्येकेनैवंभूतं दृष्टं, तेन च कार्पटिकानामग्रतो जल्पितं, तैश्च गूडघृतसमन्वितमण्डकलाभो निर्दिष्टः लब्धश्च गृहाच्छादेन, मूलदेवस्तु धर्मकथया स्थित्वा प्रभाते आरामं गत्वा पुष्पाण्युच्चित्योपाध्यायसमीपं प्राप्य पुष्पाणि समर्प्य स्वप्नं कथितवान्, तेन च स्वप्नस्य निर्णयं हृदये संस्थाप्य प्रथमं दुहितुर्विवाहकर्म्म कृतं, पश्चाद्राज्यलाभो निकटवर्ती स्वप्नफलमाख्यातं, वेन्नातटं नगरं प्राप्तः, चोरिकया प्रविष्टः, क्षेत्रद्वारे गृहीतः, वध्यभूमिं रासभारोपितः शरावमालालंकृतो नीयमानोऽस्ति, अपुत्रराजमरणे हस्त्यादिपंचदिव्याधिवासनं महत्तमादिभिश्च तत्रैव नगरे कृतं, हस्त्यादिभिः देवतालंकृतैः दिव्यैः स एव मूलदेवो राजा कृतोऽऽभिषिक्तः कलशादिभिश्च, हस्तिस्कन्धारूढश्च राजा नगरे प्रवेशितः, मंत्र्यादिभिः समन्वितो मण्डलाधिपः संजातः, पूर्वमित्रं च वर्त्तिनीसहायः टक्कसद्धडः समागतः, ग्रामदानं कृत्वाऽदर्शन्यादिष्टः, कालेन गच्छता अचलसार्थवाहः शुंकचोरिकापराधेन गृहीत्वाऽऽनीतो, मूलदेवेन चाचलसार्थवाहः परिज्ञातः, मम प्राणदाता त्वं, मूलदेवोऽहं, ततः सुतरां भीतः आश्वासितश्च, वस्त्राभरणादि ताम्बूलादि दत्त्वा प्रेषितः, चिन्ततं च मूलदेवेन-' भुञ्जउ जं वा तं वा निवसिज्जउ पट्टणे व रन्ने वा । इट्ठेण जत्थ जोगो तं चिय रज्जं किमन्नेणं ? ॥ १ ॥ " इष्टा च मे देवदत्ता, तत उज्जयिनीराज्ञस्तदर्थं प्रेषिताः पुरुषाः, दानसन्मानादिकं ढौकयित्वा आनायिता, अन्यदा तन्नगरे चौरैरुपद्रवो नित्यं गृहेषु क्रियते, न चारक्षिकपुरुषैश्चौरः प्राप्यते, ततः स स्वयमेव मूलदेवराजा चौरगवेषणार्थं निर्गतो यावन्न लब्धः, ततो रजन्यां छात्रमध्ये कर्पटिकानां मध्ये सुप्तोऽत्रान्तरे मंडिकाभिधानश्चौरः उपानद्गूढपाद आगतस्तेन च स एव द्वारपार्श्वे उत्थापितः, एहि ईश्वरं करोमि, मूलदेवश्च प्रस्थितः तेन सह,

दनिकागमनस्याऽनिवेगेनागच्छत धावतः कुंडलं कर्णात् पतितं, तथाऽऽगतेन राजकुले निरूपितं, यावत् कर्णकुंडलं नास्ति, ततः कथितं वसुदत्तस्य, यथा नष्टं कुंडलं गवेषय, अन्यदा नागदत्त उद्याने अष्टमीदिने पौषधार्थं गंतुं प्रवृत्तो यावदंपथे जिनगृहस्योपगोपितिदिगंतराले कुंडलं पश्यति, ततो निवृत्तोऽसौ, तेन चारक्षकेन वसुदत्तेन दृष्टः, किं प्रयोजनं निवर्त्तते यावद् दृष्टं कुंडलं गृहीतं न, मनोयाने प्रतिमास्थितोऽन्यप्रदेशे, तेन चारक्षिकेन सकुंडलो बद्ध्वा पुरुषैः राजकुलं नीतो, दर्शितश्च द्रोहकारी, तेन च वध्य आज्ञापितः, पटहकश्च दापितः, स्वकीयकर्मभिर्वध्यभूमिं नीयते, सर्वलोकैर्हाहारवः कृतः, नास्ति दोषगन्धोऽप्यस्य, किंचिद्वैरिकमारक्षिकवसुदत्तस्य, स च नीयमानो गृहान्निर्गतया नागवसुदारिकया वध्यमण्डनसमन्वितो दृष्टः, रुदितं च हृदयमध्ये, नागदत्तेन च दृष्ट्वा द्वारं उरःस्थं सिंचंती अश्रुभिः, तेन चिन्तितं यदि मुंचेयमुपसर्गात्ततः कचित् कालं अनया सह भोगलक्ष्मीमनुभूय प्रव्रज्यां गृहीष्ये, अन्यथा सागारं भक्तपानप्रत्याख्यानं गृहीतं मयेति. नागवसुदारिका च गृहाच्चैत्ये गत्वा कायोत्सर्गस्था संजाता चिंतितं च-नागदत्तश्रावकस्य देवता सान्निध्यं करोतु, तया च-कथितः सर्वोऽप्यारक्षिकवृत्तान्तः राज्ञे, राज्ञा च नागदत्तो हस्तिस्कन्धारोपितः वाणारसीनगरीत्रिकचतुष्कादिषु महाविभूत्या भ्रमणं कारयित्वा स्वगृहं प्रवेशितः, वसुदत्तश्च द्रव्यापहारं कृत्वा निर्विषय आज्ञापितः, प्रियमित्रसार्थवाहेन धनदत्तसमीपमागत्य नागदत्तस्याग्रतो देवताराधनादिः सर्वोऽपि वृत्तान्तो नागवसूसंबंधो कथितः, तस्मुष्टो नागदत्तो येन कारणेन मम देवतायाः सांनिध्यं दत्तं, पश्चात् प्रतिपन्नं विवाहादिकं पितुर्वचनं, वृत्तविवाहश्च कामभोगान् देवलोकसदृशान् भुक्त्वा निर्विण्णकामभोगोऽनित्यमायुर्ज्ञात्वा सुस्थिताऽऽचार्यसमीपे श्रमणः संवृत्तो, नागवसूः महत्तरासमीपे साध्वी संजाता, कालेन ज्ञानमधीत्याऽलोचनाप्रदानव्रतारोपणभक्तप्रत्याख्यानाराधनादि कृत्वा सुरलोकं गताविति ॥ यतनाद्वारं षष्ठमाह—

तनाभिः कदर्थयित्वा दशविधप्राणेभ्यः पृथक्कृतः । इत्याद्यनेके दोषा अदत्तादाने इति गाथार्थः । गुणद्वारं पंचममाह—

**परदव्वहरणविरया गुणवंता पडिमसंठिय सुसीला । इहपरलोए सुहकित्तिभायणं नागदत्तोव ॥ ४३ ॥**

'परद्रव्यहरणविरताः' परद्रव्यहरणात् निवृत्ताः 'गुणवंतो' देशविरताः 'प्रतिमासंस्थिताः' दर्शनादिप्रतिमायुक्ताः 'सुशीलाः' शोभनशीलवंतः इहपरलोकयोः सुखं कीर्त्तिः पुण्यादिलक्षणा तयोर्भाजनं—तयोः स्थानं नागदत्तवणिग्वदिति दृष्टान्त इति गाथासमासार्थः । भावार्थः कथानकगम्यस्तच्चेदं—

वाणारस्यां नगर्यां जितशत्रो राज्ञोवंयस्यः धनदत्तनामा सार्थवाहः श्रावकः, तस्य धनश्रीः श्राविका भार्या, तयोः पुत्रो द्विसप्ततिकलान्वितो नागदत्तनामा, बालभाव एव पित्रादिभिः साधुसमीपं नीत्वा सम्यग्दर्शनपूर्वकाण्यणुव्रतानि ग्राहितः, अन्यदा वयस्यपरिवृतेन उद्यानवनगतजिनभवनप्रविष्टा कन्यका ददृशे पत्रच्छेदं कुर्वाणा, तेन च सन्निहिताः पुरुषाः पृष्टाः—कस्येयं कन्यका जिनप्रतिमानां पूजनं करोति, तैश्च कथितं यथा अत्रैव प्रियमित्रसार्थवाहस्य नागश्रीभार्या, दुहिता नागवधू नाम दारिका, विज्ञानगुणयुक्ता रतिरूपा तव योग्या, ततो नागदत्तेनोक्तं—न मया रागवशेन पृष्टं, मया पत्रच्छेदविज्ञानकुतूहलेन पृष्टं, अहं प्रव्रजितुकामः, सा च कन्या नागदत्तरूपेऽतीव मूर्च्छिता, सखीजनेन तदभिप्रायं ज्ञात्वा जनन्यास्तदभिप्रायः कथितः, तथापि प्रियमित्रसार्थवाहस्य, तेन च धनदत्तसार्थवाहो याचितः, तेन चोत्तरं दत्तं—पृच्छामि नागदत्तं, ततः कथितः सर्वोऽपि वृत्तान्तः, इतश्च सा कन्यका गृहान्निर्गच्छन्ती दृष्टा नगरारक्षिकवसुदत्तेन, साभिलाषश्च संजातो, द्रव्यमूल्येनापि तेन स्वयमेव याचिता, प्रियमित्रेण चोक्तं—दत्ता नागदत्तस्य, स च छिद्रान्वेषी संजातो, मारयित्वापि नागदत्तं मया परिणेतव्या । अथान्यदा राज्ञोऽश्ववा-

हस्तिकागतस्याऽतिवेगेनाऽऽगच्छतः धावतः कुंडलं कर्णात् पतितं, तथाऽऽगतेन राजकुले निरूपितं, यावत् कर्णकुंडलं नास्ति, ततः कथितं वसुदत्तस्य, यथा नष्टं कुंडलं गवेषय, अन्यदा नागदत्त उद्याने अष्टमीदिने पौषधार्थं गंतुं प्रवृत्तो यावदर्धपथे जिनगृहस्योद्यानदिगंतराले कुंडलं पश्यति, ततो निवृत्तोऽसौ, तेन चारक्षकेन वसुदत्तेन दृष्टः, किं प्रयोजनं निवर्त्तते यावद् दृष्टं कुंडलं गृहीतं च, मनोद्याने प्रतिमास्थितोऽन्यप्रदेशे, तेन चारक्षिकेन सकुंडलो बध्वा पुरुषैः राजकुलं नीतो, दर्शितश्च द्रोहकारी, तेन च वध्य आज्ञापितः, पटहकश्च दापितः, स्वकीयकर्मभिर्वध्यभूमिं नीयते, सर्वलोकैर्हाहारवः कृतः, नास्ति दोषगन्धोऽप्यस्य, किंचिद्वैरिकमारक्षिकवसुदत्तस्य, स च नीयमानो गृहान्निर्गतया नागवसुदारिकया वध्यमण्डनसमन्वितो दृष्टः, रुदितं च हृदयमध्ये, नागदत्तेन च दृष्टा प्रारं उरःस्थं सिंचंती अश्रुभिः, तेन चिन्तितं यदि मुंचेयमुपसर्गात्ततः कंचित् कालं अनया सह भोगलक्ष्मीमनुभूय प्रव्रज्यां गृहीष्ये, अन्यथा सागारं भक्तपानप्रत्याख्यानं गृहीतं मयेति, नागवसुदारिका च गृहचैत्ये गत्वा कायोत्सर्गस्था संजाता चिंतितं च-नागदत्तश्रावकस्य देवता सान्निध्यं करोतु, तया च-कथितः सर्वोऽप्यारक्षिकवृत्तान्तः राज्ञे, राज्ञा च नागदत्तो हस्तिस्कन्धारोपितः वाणारसीनगरीत्रिकचतुष्कादिषु महाविभूत्या भ्रमणं कारयित्वा स्वगृहं प्रवेशितः, वसुदत्तश्च द्रव्यापहारं कृत्वा निर्विषय आज्ञापितः, प्रियमित्रसार्थवाहेन धनदत्तसमीपमागत्य नागदत्तस्याग्रतो देवताराधनादिः सर्वोऽपि वृत्तान्तो नागवसुसंबंधी कथितः, तत्पुत्रो नागदत्तो येन कारणेन मम देवतायाः सांनिध्यं दत्तं, पश्चात् प्रतिपन्नं विवाहादिकं पितुर्वचनं, वृत्तविवाहश्च कामभोगान् देवलोकसदृशान् भुक्त्वा निर्विण्णकामभोगोऽनित्यमायुर्ज्ञात्वा सुस्थिताऽऽचार्यसमीपे श्रमणः संवृत्तो, नागवसूः महत्तरासमीपे साध्वी संजाता, कालेन ज्ञानप्रशील्यालोचनामहाव्रतारोपणभक्तप्रत्याख्यानाराधनादि कृत्वा सुरलोकं गताविति ॥ यतनाद्वारं षष्ठमाह—

**उचियकलं जाणेज्जसु धरिमे मेए कलंतराइसु य । पडियस्स य गहणम्मी जयणा सव्वत्थ कायव्वा ॥४४॥**

उचितकला अष्टगुणलाभादिलक्षणा तां जानीयात्, क ?–**धरिमे**–गुडादौ **मेये**–धान्यादौ '**कलंतराइसु य**' पंचशतकलाभादिलक्षणा, पतितस्य च–नष्टस्य च '**ग्रहणे**' स्वीकरणे '**यतना**' अल्पदोषबहुगुणलक्षणा, उक्तंच–" अप्पेण बहुमेसेज्जा, एयं पंडियलक्खणं । सव्वासु पडिसेवासुं, एयं अत्थपयं विऊ ॥ १ ॥ " इति वचनात्, '**सर्वत्र**' क्रयविक्रयादौ '**कर्त्तव्या**' विधेया इति गाथासंक्षेपार्थः । साम्प्रतमतिचारद्वारमाह–

**तेनाहडं च तक्करपओग कूडतुल कूडमाणं च । तप्पडिरूवं च विरुद्धरज्जगमणं च वज्जिज्जा ॥ ४५ ॥**

स्तेनाः–चौरास्तैश्च महत्यानीतं किंचित् कुंकुमादि समर्द्धितमिति गृह्णतोऽतिचारः, तस्करप्रयोगोऽनेन प्रयोगेन क्षत्रादि दीयतेऽनेन प्रयोगेन तुलोद्धरणादिना द्रव्यार्जनं तेषां वा योगोद्वहनादि स्थगनं वा, कूटतुलकूटमानं च अधिकया गृह्णाति न्यूनया ददाति, स्वकीयपरकीयया वा, तत्प्रतिरूपकं नाम घृते वसादिप्रक्षेपादिलक्षणं, विरुद्धराज्यातिक्रमः–विरुद्धनृपयोः राज्ये परस्परंगमनादिके निषिद्धे लोभाभिभूतो गमनागमनं करोति तेन चातिचारो '**वर्जयेत्**' परिहरेदिति गाथार्थः । भंगद्वारमाह–

**जो चिंतेइ अदिन्नं गिण्हेमि पयंपए तहा गिण्हे । अइयारेसु य वट्टइ पुणो पुणो तस्स भंगो वा ॥ ४६ ॥**

यः कश्चिच्चिंतयति-अदत्तं स्वामिना '**गृह्णामि**' स्वीकरोमि, प्रजल्पेदेवं वाचा, तथा गृह्णाति, एवं '**अतिचारेषु**' खंडनारूपेषु वर्त्तते, द्वित्र्यादिवारां पुनः पुनः तस्य भंगोऽत्र तस्य जीवस्य, भंगः–सर्वाभावलक्षणोऽत्र–अदत्तादानव्रतविषये जायत इति गाथार्थः ॥ भावनाद्वारमाह–

**जे दंतसोहणंपिहु गिण्हंति अदिण्णयं न य मुणिंदा। तेसिं नमामि पयओ निरभिस्संगाण गुत्ताणं ॥ ४७ ॥**

ये साधवो दन्तशोधनाद्यपि, हुर्वाक्यालंकारे, गृह्णन्त्यदत्तं स्वामिनेति गम्यते, अपिशब्दाद् भस्मगोमयादि, नैव 'मुनीन्द्राः' मुनीनां-यतिनामिन्द्राः-प्रधानयतयो, न तु द्रव्ययतयः, तेषां नौमि 'प्रयतः' प्रयत्नवान् मनोवाक्कायैर्निरभिष्वङ्गाणां-द्रव्यादिषु प्रतिबंधरहितानां, गुप्तानां मनोवाक्कायगुप्तिभिर्गुप्तानामित्यर्थः, उक्तं नवभेदमदत्तादानमनुव्रतं तृतीयं, साम्प्रतं चतुर्थमाह-तत्रापि प्रथमं द्वारं,

**अट्ठारसहा बंभं नवगुत्तीपंचभावणासहियं। कामचउवीसरहियं दसहा वा अट्ठहा वावि ॥ ४८ ॥**

'अष्टादशधा ब्रह्म' औदारिकं योगत्रिककरणत्रिकेण नवभेदं, वैक्रियमपि नवभेदमनेनैव प्रकारेण, नव गुप्तयो वसत्यादयः, 'पंचभावनासमन्वितं' पंचानां महाव्रतानां पंचविंशतिभावनामध्ये चतुर्थव्रतभावनाः पंच, ताश्च स्त्रीभवयवानवलोकनादयः, आचारांगभावनाध्ययने विस्तरः, कामः चतुर्विंशतिभेदः, संप्राप्तासंप्राप्तादयः, तत्र संप्राप्तश्चतुर्दशधा आलिंगनचुम्बनादिलक्षणः, असंप्राप्तः चिंतनादिः दशप्रकारः, दशवैकालिकधर्म्मार्थकामाध्ययने विशेषः, दशधा हस्तकर्म्मादिलक्षणं गन्धहस्तितत्त्वार्थसंग्रहे, अष्टधा-स्मरणं कीर्त्तनं केलिः, प्रेक्षणं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च, क्रियानिवृत्तिरेव च ॥ १ ॥ एतन् मैथुनमष्टाङ्गं, प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणं ॥ २ ॥ मित्यादिरूपो लोकप्रसिद्धः, एवमनेकप्रकारं स्वरूपं ज्ञात्वा व्रतग्रहणं विधेयमिति गाथार्थः ॥ द्वितीयं द्वारमाह—

**ओरालियं च दिव्वं तिरियं माणुस्सयं पुणो दुविहं। माणुस्स सइराई काए सयकारणाईहिं ॥ ४९ ॥**

मैथुनं हि औदारिकवैक्रियभेदात् द्विविधं, पुनः औदारिकं तिर्यग्मनुष्यभेदाद् द्विप्रकारं, एडकगवोष्ट्रमहिषीसंबंधि तिर्यगुद्भवं, मानुष्यकं स्वदारपरदारवेश्यादिसमुद्भवं, तदपि करणकारणानुमत्यादभिरिति गाथार्थः ॥ तृतीयद्वारमाह

**दुविहं तिविहेण विउव्वियं तु एगविहतिविह तिरियम्मि । मणुयं चरिमे भंगे पच्चक्खाणं चउत्थवए ॥५०॥**

द्विविधं त्रिविधेनानुमतिरहितं, श्रावकाणामनुमतेः प्रतिषेधाभावात् सामान्येन, वैक्रियं देवीविषयमनेन भङ्गकेन संभवतीति, एकविधत्रिविधभंगकेन तिर्यग्विषयं, कारणानुमतिभ्यां तिर्यग्विषयस्य मैथुनस्य सम्भवात् गोअजाघोटिकादीनां वृषभादिप्रदानप्रकारेण, मनुष्यस्त्रीविषयमेकविधैकविधेन–कायेन स्वयंकरणलक्षणेन च चरमभंगकेन, शेषा न तु अष्टापि व्यूहाः, चतुर्थव्रते प्रत्याख्यानं कर्त्तव्यमिति गाथार्थः ॥ चतुर्थद्वारमाह—

**गिरिनयरे तिन्नि वयंसियाउ दो जमलगा वणिसुया य । परलोए नपुंसत्तं दोहग्गं चेव दोसा य ॥ ५१ ॥**

गिरिनयरपत्तने तिस्रो 'वयस्याः' मित्रभावसम्पन्नाः उदग्रयौवनाः प्रथमप्रसवने उज्जयन्तपर्वते चैत्यवन्दनार्थं गच्छन्त्यश्चौरैर्गृहीता परकूले विक्रीता वेश्यानां हस्ते, तत्र ताः प्रसिद्धनामानो वेश्यागुणैर्युक्ताः शृंगाराकारसंपन्ना वेश्याः संजाता, ताभिः स्वपुत्रा गिरिनगरे बालभावे त्यक्ताः, कालेन यौवनं प्राप्ताः, वाणिज्येन परकूलं गताः, विकालवेलायां तासां मातॄणां तैर्भाटिर्दत्ता, द्वाभ्यामकार्याचरणं कृतं मातृभ्यां सह, एकश्च कुलदेवतया गोवत्सरूपेण मानुषभाषया प्रतिबोधितो गतो गृहे वेश्यायाः, उपविष्टः, तेन च सा पृष्टा–कुतः त्वं ? सा चाह–"सरिह नरिंदह रिसिगणह वरकामिणि कमलाह । उग्गम जे पुच्छंति बहु कओ कुसलत्तण ताह ? ॥ १ ॥" एवमेतत्, तथाऽपि मम कौतुकं, ततस्तया रुदन्त्या सर्वोऽपि वृत्तान्तः कथितः, तेनोक्तम्–अस्माकं

गृहं मातरः, प्रभातसमये द्रव्यदानेन मोचिताः सर्वाः, स्वनगरमानीताः । एते दोषा अनिर्वृत्तानामिति ॥ द्वितीयकथानकम्—

मथुरायां नगर्यां कुबेरसेना गणिका प्रथमगर्भेणातीव बाधिता, वैद्यस्य कथितं, तेनोक्तं–अयि युग्मगर्भदोषोऽयं, न रोगदोषोऽस्ति, मात्रा सा उक्ता–प्रसवकाले मा बाधा भविष्यति तस्मादौषधेन गालय, तया नेष्टं, ततः कालेन दारको दारिका च जाता इति, पुनर्जनन्योक्तं–दश रात्रीः परिपाल्य त्यक्ष्यामि, ततो मुद्राद्वयं कुबेरदत्तकुबेरदत्तानामकं घटयित्वा गलके बध्वा मंजूषायां प्रक्षिप्य यमुनायां प्रवाहिते, प्रभातसमये सोरिकपुरे नदीतटस्थितेन श्रेष्ठिद्वयेन मंजूषा आगच्छमाना उदकमध्ये दृष्टा, गृहीता च यावन्मध्ये बालकयुगं दृष्टं, एकेन दारको गृहीतो द्वितीयेन दारिका, यौवनप्राप्तयोर्विवाहधर्म्मः कृतः, यावद् द्यूतकाले मुद्रारत्नं संचारितम्, एकघटनारूपं दृष्ट्वा कुबेरदत्तस्य शंका संजाता, न मम अस्या उपरि भार्याबुद्धिः, गत्वा मातरं पृष्टवान्, तया शपथपूर्वं कथितं, तेन चोक्तं-विरूपमाचरितं, तेन वधूः पितृगृहं प्रेषिता, आत्मना मथुरायां व्यवहारबुद्ध्या गतः, तत्र सा कुबेरसेना गणिका स्वगृहे धृता, पुत्रोत्पत्तिश्च, कुबेरदत्ता तच्छ्रुत्वा व्रतिनी संजाता अवधिज्ञानं चोत्पन्नं कालेन, दृष्टं च तदज्ञानविजृम्भितं पुत्रोत्पत्त्यादिकं, मथुरायामागता साध्वी, तयोः प्रतिबोधनार्थं वसति तत्रैव गृहे, गृहीत्वा बालकं त्वं मम भ्राता भ्रातृव्यो भर्तृभ्राता पुत्रश्च, त्वदीयः पिता मम भ्राता पिता पुत्रः भर्त्ता श्वशुरः, त्वदीया माता मम माता श्वश्रूः स्वपत्नी भ्रातृजाया, विरुद्धवचोभिर्भण्यमानं श्रुत्वा कुबेरदत्तो वंदित्वा स्वरूपं पृष्टवान्, आर्यिकयापि सर्वोऽपि वृत्तान्तः जन्मप्रभृति कथितः, तयोः प्रतीतिरुत्पन्ना, अज्ञानविलसनमूढेन मयैतच्चेष्टितं, निर्विण्णकामभोगः प्रव्रजितः, कुबेरसेना गणिका श्राविका संजाता ॥ तृतीय कथानक हस्तिनागपुरे महेश्वरः सार्थवाहो भार्यां सगर्भां मुक्त्वा प्रोषितः प्रसूता पुत्री, अनागमने मथुरायां च प्राग्भार्यया वीवाहिता, तथापि

न आगतो विदिग्यात्रायाः सार्थवाहः, आगतश्च मथुरायां जामातृकगृहे वर्षाकाले भाण्डशाला संजाता, दुहित्रा च सह सम्बन्धः संजातो, वर्षाकालार्द्धेन गृहमागतः, पृष्टं च प्रस्तावे–किं तदा तवोत्पन्नं ?दारिकेति, क विवाहिता?, मथुरायां, ततः आनायिता, ततश्च सा पितरं दृष्ट्वा विलक्षीभूता उद्बन्धनं कृत्वा प्राणत्यागं कृतवती, पिता प्रव्रजित इत्यनिर्वृत्तानां दोषाः। अथवाऽन्यदुदाहरणं गाथायामनुक्तं–एकस्मिन् ग्रामे नन्दकुलपुत्रस्य सुदरी नाम माता, सा च दुष्टशीला, स च नन्दः स्वकीयभार्यया भण्यते,–तव माता असती, स च तस्या वचनं न श्रद्धत्ते, अन्यदा सा सुंदरी देवकुलिकायां रजन्यामन्धकारे दुष्टशीलैः पुरुषैरुपभुज्य पश्चान्नन्दः तस्याः पुत्रः प्रेषितः, तेनाप्यासेविता, वस्त्रपरिवर्त्तनं चान्धकारे संजातं, प्रभातसमये च तया वस्त्रं श्वश्रूसम्बन्धि दृष्ट्वोक्तं–हा दुष्टशील ! किमेतद्वस्त्रं मातृसंबंधि त्वया गृहीतं ? ततस्तस्य प्रतीतिरुत्पन्ना, संवेगं गतो, अथ विषया विडम्बनाहेतवः, ततस्तथाविधाचार्यान्तिके प्रव्रजितः–" सव्वावि य पव्वज्जा पायच्छितं भवंतरकडाणं। पावाणं कम्माणं ता एत्थं नत्थि दोसोत्ति ॥ १ ॥ " परलोके नपुंसकादयो दोषाः, उक्त च–" यत्र यत्र भवोत्पन्नस्तत्र ( भवे भ्रान्तिः तत्र ) तत्र नपुंसकाः। जायंते नित्यदुःखार्त्ताः, परदाररतिप्रियाः ॥ १ ॥" कपिलक्षुल्लकस्यैवैकस्मिन् भवे वेदत्रयं, तथा दुर्भगत्वादयो दोषाः स्युः, उक्त च–" मेहुणवयभंगमी आसे पोसे तहेव करकम्मे। विहवा वंझा निंदू जोणीसूलं रुहिरवाहो ॥१॥ त्ति, तदेव संस्पर्शसुखं, सैव चान्ते विडम्बना। तासु च अन्यासु च स्त्रीषु, अथ वेश्यासु को गुणः ॥१॥ इत्यादि भावयित्वा अल्पमाहैर्भाव्यमिति गाथार्थः ॥ गुणद्वारमाह—

**परपुरिसवज्जगाओ इह परलोए य लहइ कल्लाणं। एत्थ सुभद्दा सीया महासई दोन्नि दिट्टंता ॥ ५२ ॥**

परगुणवर्णनात् इहलोके–मनुष्यलोके च पुनः परलोके–अन्यजन्मनि 'लभते' प्राप्नोति 'कल्याणं' देवत्वादि-मुख्यं, अत्र प्रस्तावे सुभद्राश्राविका सीतादेवी च महासती द्वौ दृष्टान्ताविति गाथाऽक्षरार्थः। व्यासार्थः कथानकगम्यस्तच्चेदम्–

चम्पायां नगर्यां सुभद्रा श्राविकाऽतीव सर्वज्ञशासनभावितान्तःकरणा मिथ्यादृष्टिना परिणीता, स च तदनुवृत्त्या श्रावकः संजातः सर्वं तत् कुलं बुद्धभक्तं, तस्याः छिद्राणि अन्वेषयति, सुभद्रा च जिनभवनं गत्वा चैत्यादिपूजां कृत्वा धर्म्म-श्रवणादि कृत्वा ततः आगच्छति, एतानि च मानुषाणि भर्तुः कथयंति, यथैषा दुष्टशीला चैत्यभवने साधुसमीपे बृहतीं वेलां तिष्ठति, स न तद्वचो न श्रद्धत्ते, अन्यदा क्षपको भिक्षार्थमेकः प्रविष्टः तद्गेहं, अक्ष्णोः कणुकप्रवेशं दृष्ट्वा तया च जिह्वया निष्कासितं, तिलको ललाटे लग्नः साधोः, ताभिश्च तद् भर्तुर्दर्शितं, ततः प्रतनुरागोऽसौ संजातो विपरिणतश्च, 'बलवानिन्द्रियग्रामः पंडितो-ऽप्यत्र मुह्यति' इति वचनात्, तया च ज्ञाता व्यतिकरः सर्वोऽपि, चिंतितं च दर्शनलाघवेन महोड्डाहः, ततः स्थिता अभोजनेन रात्रौ शासनदेवताऽऽराधनार्थं कायोत्सर्गेणा गतया देवतया कथितं यथा चंपानगरोद्वाराणि त्वया चालनीकृतोदकेन लोकसम-न्वितया उद्घाटनीयानि, ततः शासनोन्नतिर्भविष्यति, इति भणित्वा गता, प्रभातसमये नगरद्वाराणि विघट्टितानि नोद्घटंते लोकैः, ततो वचनमाकाशे संजातं–या सती चालनीकृतोदकेन स्वगृहान्निर्गत्य प्लावयिष्यति सा उद्घाटयिष्यति यावत् सर्वाभिः स्त्रीभिः स्वगृहे चालनीकृतोदके परीक्षा कृता, तदा सुभद्रया भर्तुरात्मीयं सामर्थ्यं दर्शितं, नन्दिघोषश्च कृतो, गता पूर्वद्वारे उद्घाटितं नमस्कारं पठित्वा, दक्षिणं पश्चिमं च, तत उत्तरद्वारे गत्वा आत्मसांनिध्यं दर्शयित्वोक्तं–या मया सदृशी सा उद्घाटयिष्यति, सर्वासां ननन्द्रादीनां मषीकूर्चको दत्तः, तदद्यापि तद् द्वारं तथैव स्थितमिति, अहो सर्वज्ञशासनप्रभाव इति लोके प्रभावना कृतेति॥

अथवा सीतादेवी रामदेवस्य भार्या रावणप्रतिवासुदेवेन नीतोदाहरणं, पद्मचरिते विस्तरः, कत्थ (एवं) श्रावकस्य गुणे उदाहरणं । यतनाद्वारं षष्ठमाह—

**छन्नंगदंसणे फासणे य गोमुत्तगहण कुसुमिणे । जयणा सवत्थ करे इंदियअवलोयणे य तहा ॥ ५३ ॥**

'छन्नंग' त्ति नाभेरधोदर्शने स्पर्शे च गोमूत्रग्रहणं, योनिमर्दनेन ग्रहणं, कुस्वप्नं—भोगभुंजनलक्षणं, उद्रेकात्, यतना सर्वत्र कुर्यात्, स्त्रीणामङ्गप्रत्यङ्गनिरीक्षणं प्रति, इन्द्रियाद्यवलोकन सरागदृष्ट्या परित्यजेदिति संटंक इति गाथार्थः। अतिचारद्वारमाह—

**परदारवज्जिणो पंच होंति तिन्नि उ सदारसंतुट्ठे । इत्थीए तिन्नि पंच व भंगविगप्पेहिं अइयारा ॥ ५४ ॥**

'**परदारवर्जिनः**' परकलत्रत्यागिनः पंचाप्यतिचारा भवंति, त्रयः स्वदारसन्तोषिणः, अनंगक्रीडा परविवाहकरणं कामभोगतीव्राभिनिवेशश्च,, इत्वरपरिगृहीतापरिगृहीतागमने तु भङ्गः, स्त्रीणां तु त्रयोऽतिचाराः पंच वा, भंगविकल्पैरतिचाराः संभवंतीति, विस्तरार्थोऽणुव्रतविधाविति । अष्टमं द्वारमाह—

**इत्थी पुरिसेण समं विसयपसंगं करेइ दप्पेणं । तइया भंगो जायइ अइयारो अन्नहा होइ ॥ ५५ ॥**

स्त्री पुरुषेण समं पुरुषो वा स्त्रिया सार्धं '**विषयप्रसंगं**' मैथुनसेवनं '**करोति**' विदधाति '**दर्पेण**' व्रतातिचारा भीरुतया तस्मिन् काले '**भङ्गः**' सर्वव्रताभावलक्षणः '**जायते**' उत्पद्यते, अतिचारोऽन्यथा—बलात्कारादिना सस्तूकस्य भवतीति योगः इति गाथार्थः ॥ भावनाद्वारं नवममाह—

**अट्ठारसहा बंभं जे समणा धारयंति गुत्तिजुयं । बहुसावज्जं नाउं तेसिं पणमामि निच्चमहं ॥ ५६ ॥**

'अष्टादशधा ब्रह्म' अष्टादशभेदभिन्नमौदारिकादि ब्रह्मचर्यं ये 'श्रमणा' यतयो 'धारयन्ति' अनुपालयंति 'गुप्तियुक्तं' नवब्रह्मचर्यगुप्तिसमन्वितं 'बहुसावद्यं ज्ञात्वा' प्रभूतपापं विज्ञाय 'तेषां प्रणमाम्यहं' तेषां मुनीनां नमस्कारं करोमि 'नित्यं' सदा–सर्वकालमिति गाथार्थः। उक्तं मैथुनाख्यं चतुर्थव्रतं, साम्प्रतं परिग्रहाख्यं पंचमं नवभेदमाह, तत्रापि प्रथमं द्वारं—

**मुच्छा परिग्गहो इह अइरित्त असुद्ध तह ममत्ते य। एयस्स उ जा विरई सरूवमेयं तु नायव्वं ॥ ५७ ॥**

'मूर्च्छा' गार्द्ध्यं–अतीव प्रतिबन्धः परिग्रहो भवतीति सम्बन्धः, अतिरिक्तः प्रमाणात् परिग्रहः, तथा ममत्वेन च धनधान्यादिपरिग्रहः, एवंभूतस्य तु परिग्रहस्य या 'विरतिः' निवृत्तिः, स्वरूपमेतत् परिग्रहस्येति गाथार्थः॥ भेदद्वारमाह—

**खेत्तं वत्थु हिरन्नं सुवन्नधणधन्नकुवियपरिमाणं। दुपयं चउप्पयंपि य नवहा उ इमं वयं भणियं ॥ ५८ ॥**

क्षेत्रं–सेतुकेत्वादिलक्षणं, गृहादि वास्तु खातादिरूपं धवलगृहादि, हिरण्यं–घटिताघटितरूपं द्रम्मादि, सुवर्णं–कनकं, धनं–गणिमधरिममेयपारिच्छेद्यरूपं चतुर्विधं धान्यं–शालिगोधूमादिरूपं, कुपितं–गृहोपस्करं पात्रीकरोटतूल्यादिलक्षणं, द्विपदं दासीकलत्रादि, चतुष्पदं–गवाश्वादिरूपं, चशब्दः स्वगतानेकभेदसंसूचनार्थः। 'नवधा तु' नवभेदं त्विदं व्रतं–परिग्रहपरिमाणलक्षणं 'भणितम्' उक्तं गणधरादिभिरिति गाथार्थः॥ तृतीयद्वारमाह—

**अत्थं अणत्थविसयं संतोसविवज्जियं कुगइमूलं। तप्परिमाणं नाउं कुणंति संसारभयभीया ॥ ५९ ॥**

'अर्थं' हिरण्यादि अनर्थविषयं अपायकारित्वात्, ब्राह्मणदारकयोरिव, उदाहरणं, कथमेतत् ? कौशवर्द्धने

नगरे ब्राह्मणभीमपुत्रौ देवदेवशर्माख्यौ दारिद्र्याभिभूतौ कौशाम्ब्यां प्राप्तौ, इतश्च राजदुहितुः सौभाग्यसंदीपनकमेव उत्सवनकं कृतं, तस्य च तस्मिन्नेव दिने उज्जमनं, तत्र प्रधानद्रव्यं मौक्तिकादि प्रच्छन्नं ब्राह्मणानां समवयसां दातव्यं, तौ च भीमसुतौ तद्रूपौ, द्वयोः कचोलकयोरधो मौक्तिकसुवर्णादि कृत्वोपरि सूपकारादिकृतं ढौकितं तयोः, नदीतटे गत्वा पादशौचादिकं कृत्वा भोक्तुमारब्धौ, यावद् दृष्टमधः प्रधानद्रविणं, ततो द्वयोरपि मारणाध्यवसायः संजातो द्रव्यलोभेन, देवेन चिंतितम्—एनं लघुभ्रातरं मारयित्वा द्रव्यं गृह्णामि, देवशर्मणाप्येतदेव चिंतितं, ततस्तयोर्द्वयोरपि जल्पोऽभूदेतत् मौक्तिकदीनारादिकं निधानीकृत्य पुनरपि गच्छावो, निधानीकृत्य प्रस्थितौ, यावदग्रतः कूपं दृष्ट्वाऽन्योऽन्यवधपरिणतयोर्देवेनोक्त—कीदृशः कूपः, ? देवेन कूपे प्रक्षेप्तुमारब्धः, स च तस्य शरीरे लग्नो द्वावपि पतितौ, ततः सर्पभावेनोत्पन्नावासन्नप्रदेशे, तत्र स्थाने तयोर्महानागयोरतीव मूर्च्छया भंडनं जातमतिक्रोधेन यावत् मृतौ मूषकभावेनोत्पन्नौ, तन्निकटस्थाने मिलितयोः पुनरपि युद्धं संलग्नं, ततोऽतिक्रोधाध्मातौ मृत्वा कलभभावेनोत्पन्नौ, कालेनागतेन यूथेन सह तयोर्द्वयोरपि युध्यमानयोर्लुब्धकः समायातः तथापि न नष्टौ तौ, शेषं प्रपलायितं यूथं, व्याधेन वाणेन विद्धौ, अकामनिर्जरया मृतौ कर्म्माशुभं क्षपयित्वा कौशाम्ब्यां माधवाभिधानस्य ब्राह्मणस्य वसंतिनीभार्यायाः पुत्रत्वेनोत्पन्नौ युग्मभावेन, ततस्तयोर्नाम कृतं रुद्रः महेश्वरश्च, तस्य च माधवस्य निधानासन्ने क्षेत्रं, तौ चाष्टवर्षौ तत्रागतौ, परस्परं द्वयोरपि तस्य स्थानस्योपर्यतीव मूर्च्छा, तया कलहं कुरुतो राटिं कुरुतः पिट्टापिट्टिं च, गृहे गतौ स्नेहेन तिष्ठतः, उद्वेजितः पिता ताभ्याम्। अन्यदा विमलयशोऽभिधानः सूरिर्मनोरमाभिधानोद्याने समवसृतः, तत्र सराजादिः पौरजनपदः समायातः, संशयच्छेद्याचार्य इति श्रुत्वा तत्राशोकदत्ताभिधानः श्रेष्ठी समायातः, तस्याशोकश्रीर्दुहिता, तां चातीवरूपादिगुण-

गृहकामप्यलीवाभरणालंकारविलेपनसुगंधपुष्पादिसमन्वितामपि न कश्चिन्नाम्नाप्यालपति. ततस्तेन तस्या दुर्भगत्वकारणमति-नयज्ञानी पृष्टः, तेनोक्तं—यथा प्रतिष्ठाने नगरे विमलाभिधानः श्रेष्ठिपुत्रो धनवानासीत्, तस्य धनश्रीभार्याऽनुरक्ता भक्ता सौन्दर्या-दिगुणसमन्विता पुत्रभांडरहिता वन्ध्या, ततस्तया सह पर्यालोच्य द्रव्यपरिरक्षणार्थं श्रीप्रभाभिधाना द्वितीया भार्या परिणीता, तस्या धनश्रीमारणोपायं चिंतयन्त्याः परिव्राजिका आगता, तस्या उपचारं कृत्वोक्तवती—धनश्रिया (श्रीः) गृहान्निष्कासिता भवति तथा कुरु, तया तु विमलस्य मार्गे गच्छतोऽपरया संकेतितया सह जल्पितं—अहं कल्ये धनश्रियाः पार्श्वममुकेन श्रेष्ठिपुत्रेण प्रेषिता, कर्णोपकर्णिकया प्रविष्टं विमलस्य, तेन चापर्यालोच्यागत्य च पितृगृहं प्रेषिता, पुरुषाश्चोक्ताः—पितृगृहं प्रवेश्याधौतपादैर्निर्गंतव्यं, तत्र तथैव कृतं, "कुदृष्टं कुपरिजातं, कुश्रुतं कुपरीक्षितम् । पुरुषेण न कर्तव्यं, विमलेन कृतं यथा ॥१॥" पित्रा धनश्रिया च देवताराधनं कृतं, देवतया चोक्तं—अचिरात् जामातृकः तवानयनाय आगमिष्यति, तस्याश्च श्रीप्रभाया महाज्वरेण ग्रस्तायाः पश्चात्तापः संजातः, ततः स्वजनप्रत्यक्षं विमलप्रत्यक्षं च धनश्रीव्यतिकरः परिव्राजिकाभणनलक्षणः सर्वोऽप्यात्मशुद्ध्यर्थं मरणकाले कथितः, ततो विमलेनात्मनिंदां कृत्वा सा श्रीप्रभा श्लाघिता, यथा मरणकालेऽपि त्वया कर्मापर्यालोचितकरणं कथितं, नैमित्तिकेन च कथितं यथा नास्मिन् प्रस्तावे श्रीप्रभाया मरणं, ततो वैद्येन बलात् तैलमानीय मातुः समर्पितं, जघेकदेशो मर्दितः, मनाक् गुणो जातः, गतं यथा वातज्वरः, ततो जीविताशा, विमलेन चिंतितं—दूरस्था धनश्रीः तदैव राजकुलादुपचारेण पंचाशद्योजनगामिन्यो दिनेन गत्वा आनीय दिनद्वयेन प्राप्तः धनश्रीपितृगृहं, मिलितो भूतो श्वशुरः ततः स्नानभोजनताम्बूलवस्त्रविलेपनादिना सन्-मानितः, दिनं निरूपितं शोभनं, दिनपंचकं श्वशुरगृहे स्थितवान्, ततः श्रीप्रभां निष्काशयितुमारब्धः, ततः धनश्रियोक्तं—मम भगि-

नीयं नास्यापराधगन्धोऽप्यस्ति, मदीयपूर्वकर्मविजृम्भितमेतदिति विधृता, ततो धनश्रीः प्रव्रज्योपस्थिता विधृता, सप्त वर्षाणि यावत् महान्तं जिनायतनं कारयामि द्रव्यविनियोगं च, ततः कालेन महादानजिनभवनाष्टाह्निकाप्रतिमायोग्याभरणरामलंकारादिषु प्रभूतं द्रविणजातमा(दि)जिनायतने दत्त्वा जीवानन्दाचार्यसमीपे प्रव्रजितो विमलः सभार्यः,प्रव्रज्यां कृत्वा श्रीप्रभा सौधर्मे ललिताङ्गकविमाने गता, विमलो धनश्रीर्ब्रह्मलोके पंचमकल्पे गतो, श्रीप्रभा च तत्कर्म्मसावशेषेण सौधर्माच्च्युता हे अशोकदत्तश्रेष्ठिन् ! तव दुहिताऽशोकश्रीप्रभात्वेनोत्पन्ना, तस्य कर्म्मणो विपाकं दुर्भगत्वमनुभवति, ततस्तच्छ्रुत्वा जातिस्मरणमुत्पन्नं, अश्रुपातं कुर्वती विमलयशस आचार्यस्य पादयोः पतिता, प्रव्रज्यादानेन ममानुग्रहं कुरु, तेनोक्तं-वर्षपंचकादूर्द्ध्वं गत्वा कर्म्मापगमस्तत्र भविष्यति, ततो भुक्तभोगा सती त्वं प्रव्रज्यायोग्या भविष्यसि, इतरथा व्रतभंग एव तव, अस्मिन् प्रस्तावे माधवब्राह्मणेन पादयोर्निपत्य पृष्टो विमलयशाः सूरिः-भगवन् ! किमत्र कारणं मम पुत्रयोः रुद्रमहेश्वरयोरत्र क्षेत्रेऽस्मिन् प्रदेशे वैरं परस्परं कलहादिकं च, गृहगतयोस्तु स्नेहः, भगवता निधानादिकं मरणकारणं चातुर्भविकं सविस्तरं कथितं, ततस्तयोः ब्राह्मणदारकयोः जातिस्मरणेन पूर्वभवाः प्रकटीकृताः पादयोः पतिता आचार्यस्य, निधानं निरूपितं, ततः सर्वेषां प्रत्ययः संजातः, पितरमापृच्छय व्रतं गृहीतं, माहेन्द्रकल्पे देवावुत्पन्नौ इति ।अत्थ अणत्थविसयं संतोसविवज्जियं कुगइमूलं । तप्परिमाणं नाउं कुणंति संसारभयभीया ॥१॥ अतोऽर्थमनर्थविषयं 'संतोसविवज्जियं,' सन्तोषसमन्वितं तु दानोपभोगयुक्तं कर्म्मक्षयहेतुर्यशोहेतुश्च भरतादेरिव, कुगतिमूल लोभग्रस्तानां गलकर्त्तादीनामतः 'तत्परिमाणं' परिग्रहपरिमाणं ज्ञात्वा भंगकविधानेन कुर्वन्ति संसारभयभीताः ॥दोषद्वारमाह—

अनियत्ता उण पुरिसा, लहंति दुक्खाइं णेगरूवाइं । जह चारुदत्तसड्ढो पब्भट्ठो माउलाहिंतो ॥ ६० ॥

अनिवृत्ताः, कस्मात् ?–परिग्रहात्, पुनः पुरुषा 'लभंते' प्राप्नुवंति दुःखान्यनेकरूपाणि नारकतिर्यक्छेदनादीनि, मनुष्येषु–
'' जणयमुयाणं च जए जणणीपुत्ताण भाउयाणं च । चइलस्स धणस्स कए नासइ नेहो खणद्धेणं ॥ १ ॥ अडइ बहुं वहइ भरं
सहइ छुहं पावमायरइ धिट्ठो । कुलसीलजाइपच्चयठिइं च लोभद्दुओ चयइ ॥२॥ धावेइ रोहणं तरइ सायरं वसइ गिरिनिउंजेसु ।
बंधवजणं च मारइ पुरिसो जो होइ धणलुद्धो ॥ ३ ॥ मोहस्यायतनं धृतेरपचयः क्षान्तेः प्रतीपो विधिर्व्याक्षेपस्य सुहृन्मदस्य
भवनं ध्यानस्य कष्टो रिपुः । दुःखस्य प्रभवः सुखस्य निधनं पापस्य वासो निजः, प्राज्ञस्यापि परिग्रहो ग्रह इव क्लेशाय नाशाय
च ॥४॥'' यथा चारुदत्तः श्रावकः प्रभ्रष्टः मातुलात् । कथानकं हरिवंशकथायां विस्तरेणात्र न लिखितमिति ॥ गुणद्वारमाह—
जे इह परिणामकडा संतोसपरा दढव्वया धीरा । ते जिणदासोव्व सया हवंति सुहभाइणो लोए ॥ ६१ ॥
ये पुरुषा 'इह' लोके 'परिमाणकृताः' कृतपरिमाणाः तथा 'सन्तोषपराः' सन्तोषप्रधानाः 'दृढव्रताः' प्राणत्यागेऽपि
व्रतभंगं न कुर्वन्ति 'धीराः' सत्त्ववन्तः, ते पुरुषा जिनदासश्रावक इव 'सदा' सर्वकालं 'भवन्ति' जायन्ते सुखभागिन इह
लोक एव, उक्तं च–'' सर्वाः सम्पत्तयस्तस्य, सन्तुष्टं यस्य मानसम् । उपानद्गूढपादस्य, ननु चर्म्मावृतैव भूः ॥ १ ॥ जह २
अप्पो लोहो जह २ अप्पो परिग्गहारंभो । तह २ सुहं पवड्ढइ धम्मस्स य होइ संसिद्धी ॥ २ ॥ दानं भोगो नाशस्तिस्रो गतयो
भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते, तस्य तृतीया गतिर्भवति ॥३॥'' 'लोके' मनुष्यलोके इति गाथार्थः । भावार्थः कथान-
कगम्यस्तच्चेदम्–पाटलिपुत्रे नगरे जिनदासश्रावकः सम्यग्दर्शनादिपूरकं गृहीताणुव्रतधारी तिष्ठति, तत्र च तडागं खन्यते
राजादेशेन, कर्म्मकरैः स्वर्णमया लोहसदृशाः कुशा उपलब्धाः, तत् स्थानं प्रच्छन्नं कृतं, तेषां चैकैकं दिने २ प्रथमं जिनदास-

श्रावकस्य लोहमूल्येन प्रयच्छंति, न गृहीताः सुवर्णमिति ज्ञात्वा, नास्माकं प्रयोजनमेतैः, ततो नन्दस्य समर्पिताः, तेन च सुवर्णमयान् जानताऽपि लोहमूल्येन गृहीताः, दिने २ समानयनीयाः, अहं मूल्यं दास्यामि, ततश्च कालेन गच्छता कस्यचित् स्वजनस्य गृहे भोजनार्थं बलात्कारेण नीतस्तेन च गच्छता पुत्रस्य आदेशो दत्तो, न च सद्भावकथनं कृतं, यथा सुवर्णमयाः कुशा गृहीतव्या, ते च आगताः, न चाधिकं मूल्यं प्रयच्छति, ततोऽन्यस्य हट्टे अन्यस्य वीथ्यां नीताः, न कश्चिन्नंदमूल्येन गृह्णाति, ततस्तैः निर्विण्णैः खाट्कृत्य भूमौ पातिताः, कीट्टमपगतं, सुवर्णमयाः संजाताः, दण्डपाशिकेन दृष्ट्वा कुशा गृहीताः कर्म्मकराणां पार्श्वाद्, राजकुलं प्राप्य वृत्तान्तमापृच्छ्य तडागसंबन्धिनं जिनदासश्रावकस्य समर्पिता इत्यादि, ततश्चौरनिग्रहः तेषां, लोभनन्दस्तु तस्माद् भोजनाद् शीघ्रमागतः, कुशग्रहणं न कृतं पुत्रेणेति पादभङ्गः कृतः, राजपुरुषाः समागताः, कृकाटिकायां गृहीत्वा राजकुलं नीतः, गृहसर्वस्वं प्रगृह्य चौरनिग्रहः कृतः, जिनदासस्तु निर्लोभ इतिकृत्वा पूजितः, एवमाद्यनेके गुणाः कृतपरिग्रहपरिमाणानामिति ॥ साम्प्रतं यतनाद्वारमाह—

**संभरइ वारवारं मोक्कलतरयं च गेण्हइस्सामि । एयं वयं पुणो चिय मणेण न य चिंतए एवं ॥ ६२ ॥**

संस्मरति व्रतं वारंवारं–पुनः पुनः आगामिनि काले चतुर्मासादौ मुत्कलतरं ग्रहीष्यामि, नैतन् मनसापि चिंतयेत्–प्रभूततरमेतन् परिग्रहव्रतं लास्यामीति न विचिन्तयेदिति गाथार्थः ॥ अधुना अतिचारद्वारं सप्तममाह—

**खित्ताइहिरण्णाईधणाइदुपयाइकुप्पमाण कमे । जोयणपयाणबंधणकारणभावेहिं नो कुणइ ॥ ६३ ॥**

क्षेत्रादिहिरण्यादिधनादिद्विपदादिकुप्यमाने परिग्रहमाने क्रमः–प्रतिक्रमः; कथं ? यथासङ्ख्येन योजनप्रदानबन्धनकारणभावैर्न

दोल्लंघनं, न च क्षेत्रवास्तुसंयोजना वृत्तिभित्त्यपगमेन एकक्षेत्रैकवास्तुकरणमतिक्रमभोक्तया सुसक्तया (सशूकस्य) वा अनेन प्रकारेणातिचारो भवतीति, एवं शेषातिचारोऽपि, तथा हिरण्यसुवर्णयोरन्यस्मै प्रदानं कालावधौ यावत् पूर्यतेऽनेनाप्यतिचारः, धनधान्ययोः बन्धनं करोति, कथं ? कस्यचिद्धनधान्ये निवारणं करोत्यात्मग्रहणार्थं कालमवधार्य, यावत् द्विपदचतुष्पदयोः कालमध्ये दासियोटिकागोलयादेः पुत्रोत्पत्त्यादिनिमित्तं पण्ढादिप्रक्षेपः, कुप्यं–भोजनवरूकादि विक्रयकाले भावतः ग्रहणं करोति, तद्द्रव्यं कस्यचित् प्रयच्छति कालावधेरुपरि मया ग्राह्याणि, एवमनेन प्रकारेणात्र अतिरिक्तं गृह्णतः सशूकस्यातिचारो भवतीति गाथार्थः ॥ भङ्गद्वारमाह—

जइ जाणंतो गिण्हइ अहियं धन्नाइं तो भवे भंगो । अइसंकिलिट्ठचित्तस्स तस्स परिणामविरहाओ ॥६४॥

यदि परिग्रहातिरिक्तं 'जानन्' बुद्ध्यमानोऽतिलोभाद् 'गृह्णाति' स्वीकरोत्यधिकं व्रतातिचारनिरपेक्षो धान्यादि ततो भवेद् 'भङ्गः' सर्वाभावरूपः 'अतिसंक्लिष्टचित्तस्य' अतिरौद्राध्यवसायस्य, तस्य परिणामाभावात् इति गाथार्थः ॥

भावनाद्वारमाह—

चत्तकलत्तपुत्तसुहिसयणसंबंधमित्तवग्गया, खेत्तसुवण्णधणधण्णविवज्जियसयलसंगया ।
देहाहारवत्थपत्ताइसु दुज्झियममत्तया, चिन्तसु सुविहियां तं सावय ! मोक्खपहम्मि पत्तया ॥ ६५ ॥

हे श्रावक ! 'चिन्तय' परिभावय 'सुविहितान्' शोभनयतीनिति, किंभूतान् ? मोक्षपथप्राप्तान्, प्राप्स्यति वा परमपदं, पुनरपि किंभूतान् ? मुहुत्यक्तकलत्रपुत्रस्वजनसंबन्धिमित्रवर्गान् क्षेत्रसुवर्णद्रव्यधनधान्यविवर्जितसकलसंगान्–परित्यक्त-

समस्तप्रतिबन्धान् देहआहारवस्त्रपात्रादिषु दूरोज्झित (दूरपरित्यक्त) ममत्वान्—ममीकाराभावात्, एवंभूतान् साधून् 'भावयेत्' चिंतयेत्, एतद्बहुमानं कुर्यादिति द्विपदार्थः ॥ उक्तं पञ्चममनुव्रतं, तदभिधानात् समाप्तानि पंचाणुव्रतानि । गुणव्रतानि त्रीणि नवभेदान्युच्यन्ते, तत्र दिग्व्रते प्रथमद्वारमाह—

**तत्तायगोलकप्पे अप्पा अनिवारिओ वहं कुणइ । इय जा दिसासु विरई गुणव्वयं तमिह नायव्वं ॥६६॥**

'**तप्तायोगोलककल्प आत्मा**' अग्नितप्तलोहपिंडरूपः आत्मा—जीवः सर्वत्र जीवदहनात्मकत्वात्, '**अनिवारितः**' अकृतदिक्परिमाणो 'वधं' जिघांसनं करोति, अनिवृत्तः, 'अनिवृत्तिरेव प्रवृत्ति' रिति वचनात्. उक्तंच—"तो बंधमणिच्छन्तो कुज्जा सावज्जजोगविनिवित्तिं । अह विसयऽनिवित्तीएऽसुभभावा दढयरं स भवे ॥ १ ॥" इत्येवं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया षट्स्वपि दिक्षु 'विरतिः' निवृत्तिः 'गुणव्रतं' दिग्व्रतं दिक्परिमाणलक्षणं तदिह प्रस्तावे ज्ञातव्यं स्वरूपेणेति गाथार्थः ॥ यथा जायत इति तृतीयं द्वारमाह—

**परिमियखेत्ताउ बहिं जीवाणं अभयदाणबुद्धाए । दिसिवयगहणपरिणाम उप्पज्जइ तिव्वसड्ढस्स ॥ ६७ ॥**

परिमितक्षेत्राद्बहिः—कृतपरिमाणात् क्षेत्राद् बहिः जीवानामभयदानबुद्ध्यैव, तत्र क्षेत्रे जीवास्तेषामभयप्रदानं दत्तं भवति, दिग्व्रतग्रहणपरिणाम उत्पद्यते '**तीव्रश्रद्धस्य**' उत्कटप्रधानभावस्येति गाथार्थः ॥ दोषद्वारमाह—

**दिसिपरिणामं न कुणंति कहवि मोहेण मोहिया पावा । तिमिसगुहाए जह कोणिओ हु निहणं नरा जंति ॥६८॥**

दिक्षु परिमाणं कथमपि—कृच्छ्रेण न कुर्वन्ति मोहेन मोहिता—महामोहमूढाः 'पापाः' गुरुकर्म्माणः तिमिसगुहायां यथा

कोणिकः, तु वाक्यालङ्कारे, निधनं नरा गच्छन्ति, निधनं—मरणं, 'नराः' पुरुषाः 'गच्छन्ति' व्रजन्तीति गाथार्थः ॥

व्यासार्थं त्वाह—

चम्पायां नगर्यां श्रेणिकराज्ञः पुत्रः कोणिकाभिधानः, तेन चाष्टादश राज्ञः चेटकराजबलेन सहितान् पराजित्य हस्त्यादिरत्नं प्रभूतं संपिंडितं, कालादयश्च दश श्रेणिकपुत्रास्तेषामपि सम्बन्धि नलं तेन गृहीतं, ततो भगवत्समीपमागत्य पृष्टवान्,—चक्रवर्तिनोऽनिर्विण्णकामभोगाः क्व गच्छन्ति?, भगवानाह—सप्तमनरकपृथिव्यां, अहं क्व यास्यामि?, भगवतोक्तं—षष्ठपृथिव्याम्, अशोकचन्द्रः प्राह—किमहं चक्रवर्ती न भवामि?, भगवतोक्तं— रत्नानि न सन्ति, ततः कृत्रिमानि रत्नानि कृत्वा मंडलं साधयितुमारब्धः, ततो वैताढ्यगादारतः खण्डत्रयमाज्ञापितं, तिमिस्रगुहायां प्राप्तः, किरिमालकं गुहापालकमाज्ञापितवान् यथा तिमिस्रगुहामुद्घाटय, किरिमालकव्यन्तरदेवेनोक्तं, यथा अतीता द्वादशापि चक्रवर्तिनः, तेनोक्तम्—अहं त्रयोदशमः चक्रवर्ती, देवेनोक्तं—गच्छ स्वस्थानं, मा विनाशभाग् भव, पुनरपि कोणिकेनोक्तमवश्यंतया च, भूयोभूयः प्रतिषिद्धोऽपि न मुंचत्याग्रहं, ततः तिमिस्रगुहापालकेन कपोलप्रदेशे महतः पंचत्वं गतः, षष्ठपृथिव्यां तमःप्रभायामुत्पन्नो, यतोऽकृतदिक्परिमाणानामेते दोषाः तस्माद्दिक्परिमाणं विधेयमिति ॥ गुणद्वारमाह—

जह चंडकोसिओ खलु निरुद्धदिट्ठीमणोवई काउं । तह अण्णोवि सउण्णो सव्वसुहाणं इहाभागो ॥ ६१॥

'यथा' येन प्रकारेण चण्डकौशिकः सर्पः खलु—वाक्यालङ्कारे 'निरुद्धदृष्टि०' निवारितदहनात्मकदृष्टिप्रसरमनोवाक्कायः सुखभाग् संवृत्तः, तथा अन्योऽपि श्रावकः सुपुण्यः कृतदिक्परिमाणः सांवत्सरिकचातुर्मासिकादिकालावधिना द्विविधत्रिविधा-

दिना प्रकारेण 'सर्वसुखानां' स्वर्गापवर्गादिलक्षणानामाभागी जायत इति गाथासंक्षेपार्थः ॥ भावार्थः कथानकगम्यस्तच्चेदम्—

यथैकस्मिन् गच्छे (एकः) क्षपकः क्षुल्लकसहायः पारणकदिने भिक्षाचर्यायां प्रविष्टः, तेन च कथंचित् मंडूकिकैका पादेनाक्रान्ता मृता च, ततः क्षुल्लकेनोक्तम्—क्षपक! त्वया मण्डूकिका प्राणेभ्यश्च्याविता, क्षपकेन पूर्वमारिता दर्शिता, ततो विकाले आवश्यकवेलायां पुनरपि क्षुल्लकेनोक्तं—क्षपक! मण्डूकिका नालोचिता, ततः क्रुद्धः साधूनां मध्ये अहं उद्धंसितः, उपवेशनपीठं गृहीत्वा क्षुल्लकस्योपरि चलितोः, वाधितो अंतराले स्तम्भे, पतितो मृतश्च, ज्योतिष्केषूत्पन्नः, तस्माच्च्युतः पंचानां तापसशतानामधिपतिस्तापसकुलपतेर्भार्यायास्तापस्या उदरे समुत्पन्नो, वृद्धिं गतस्तापसकुमारः संजातोऽतीवचण्डः, कौशिक इति नाम सञ्जातं, स चातीव वनखण्डे मूर्च्छितः, न तेषां तापसानां फलादि ग्रहीतुं ददाति, ततस्तेऽन्यवनं गताः, इतश्चादूरसमीपे श्वेतम्ब्यां नगर्यां राजकुमारदारकाश्चण्डकौशिकतापसकुमारस्याटव्यां गतस्याश्रमं भङ्क्त्वा वनखण्डे बीजपूरादिफलानि गृह्णंति, ततो गोपालदारकैर्गत्वा कथितं, स च कुठारहस्तः तेषामुपरि क्रोधाध्मातः, ततस्ते प्रपलायिताः, प्रधावितः, तापसकुमारोऽप्यतिवेगेन प्रस्खलितः पतितः, कुठारको मस्तके संखाणिकायामागतो, विदारितमस्तको मृतः, ततश्च दृष्टिविषसर्प उत्पन्नो, द्वादश योजनानि दृष्ट्यवलोकितं भस्मसात् करोति, तापसाश्च केचन दग्धा अन्ये नष्टाः, वनखण्डमूर्छया वनभ्रान्त्या त्रिसन्ध्यं यत् किमपि चटककपोतादि पश्यति तत् सर्वं दहति, पुनरपि विले प्रविश्य तिष्ठति, कालेन गच्छता छद्मस्थकालेन भगवान् वर्द्धमानस्वाम्यागत्य तस्य मण्डपिकाया अदूरसमीपे कायोत्सर्गेण स्थितः, ततश्च गन्धेन निर्गतो, दृष्ट्वा च क्रुद्धो मदीयमण्डपिकाभ्यन्तरवर्ती निर्भयस्तिष्ठति, सूर्यमवलोक्य भट्टारकं प्रलोकितवान् यावद् दृष्टिः शीतलीभूता, ततो दंष्ट्राभिर्भक्षयित्वा दूरे स्थितः, मा ममोपरि पतिष्यति, यावत् पश्यति रुधिरं गोक्षीरसदृशं,

भगवता चोक्तम्—उपशम भो ! चण्डकौशिक !, ततश्चिन्तयन् ईहादिकं कुर्वतो जातिस्मरणमुत्पन्नं, क्षपककृतादिकं प्रकटीभूतं, भगवत्-
नमस्कारं कृत्वा गृहीतानशनः मुखं बिले प्रक्षिप्य कायव्युत्सर्गं कृत्वा अवस्थितः, कनकखलगोऽपि भगवन्तं दृष्ट्वा पुनरपि पूर्वस्थितया
गन्धागन्धादिसमन्वितः संजातो, लोकाश्च तं सर्पं पाषाणादिभिराहन्तुं प्रवृत्ताः, पश्चात् उपशान्तं ज्ञात्वा दुग्धदधिघृतादिभिर्म-
क्षितं लोकाः कृतं, कीटिकाभिर्भक्षयितुमारब्धोऽर्द्धमासेन मृतः सहस्रारे देवत्वेनोत्पन्न इति ॥ यतनाद्वारमाह—

तत्थ संपत्ती वि धुवं (वा) जीवाणं तह य (वि)जत्थ उवघाओ। पंचिंदियमाईणं तत्थ न गच्छंति ते कहवि॥७०॥

फलकप्राप्तिरपि 'ध्रुवा' निश्चिता जीवानां तथापि यत्रोपघातः प्रभूतानां पञ्चेन्द्रियादीनां–पंचेन्द्रियादिजीवानां यत्रोपपीडा परिमितक्षेत्राभ्यन्तरेऽपि तत्र ते न गच्छंति कथमपि, यथा मण्डूकिकाकीटिकाद्याकुलेषु मार्गेषु, तत्र गमनं न कुर्वन्तीति गाथार्थः॥

अतिचारद्वारमाह—

उड्ढं अहे य तिरियं अइक्कमो तह य खित्तवुड्ढी य। सइअंतरद्ध एत्थं वज्जिज्जा पंच अइयारे ॥ ७१ ॥

ऊर्ध्वमधस्तिर्यग्व्यतिक्रमस्तथा च क्षेत्रवृद्धिश्च स्मृत्यन्तर्धानमत्र वर्जयेत् एतानत्यतिचारान्, तत्रोर्ध्वदिक् परिमाणातिक्रमः ऊर्ध्वप्रमाणमुपरि पर्वतादिपर्वतेषु यद् गृहीतं तस्मादुपरि वृक्षादौ मर्कटादि वस्त्रादि गृहीत्वा गतस्तदानयने अतिचारः, तथा अधः कूपादौ पतितं किञ्चिदुत्तारयतोऽतिचारः, तिर्यक् परिमितक्षेत्राद्बहिः गवादिगतमानयतोऽतिचारः, क्षेत्रवृद्धिस्तु पूर्वस्या दिशो योजनान्यपरस्यां दिशि कार्योत्पत्तौ प्रक्षिपतः शतिकृत्वादतिचारः, स्मृत्यन्तर्द्धानं नाम स्मृतेर्भ्रंशः, किं मया गृहीतं कया वा मर्यादया ? इति न स्मरतीत्यतिचारः, स्मृतिमूलत्वान्नियमानुष्ठानस्य, सर्वत्रतेष्वयमतिचारः ॥ साम्प्रतं भंगद्वारमाह—

**दुविहं तिविहेण गुणवयं तु घित्तूण पेसए अण्णं । तल्लाभं वा गिण्हइ तस्स धुवं होइ इह भंगो ॥ ७२ ॥**

'**द्विविधं त्रिविधेन**' योजनविंशतेः परतः स्वयं न गच्छामि नान्यं प्रेषयामि मनसा वाचा कायेन इति दिक्परिमाणं कृत्वा ततोऽन्यं प्रेषयति प्रयोजनोत्पत्तौ, दिग्व्रतातिक्रमे यस्तल्लाभस्तं वा गृह्णात्याकुट्टिकया-जानतस्तस्य '**ध्रुवं**' निश्चयं भवतीह-व्रते भंगः सर्वव्रताभाव इति गाथार्थः ॥ भावनाद्वारमाह—

**इरियासमियाए परिब्भमंति भूमंडलं निरारंभा । सव्वजगज्जीवहिया ते धण्णा साहुणो निच्चं । ७३ ॥**

ईर्यासमित्या समिताः परि-समन्ताद् '**भ्रमन्ति**' स्थानान्तरं संक्रामति '**भूमंडलं**' पृथ्वीतलं '**निरारंभा**' आरंभविवर्जिताः '**सर्वजगज्जीवहिताः**' सर्वं जगति ये जीवास्तेषां हिता ये साधवस्ते '**धन्याः**' पुण्यभाजः '**नित्यं**' सदेति गाथार्थः ॥ उक्तं प्रथमं गुणव्रत, साम्प्रतं द्वितीयगुणव्रतं नवभेदमाह, तत्रापि प्रथमद्वारमाह—

**उवभोगपरीभोगे विणियत्ती तं गुणव्वयं बीयं । आहाराई विलयाइयाइ चित्तं जओ भणियं ॥ ७४ ॥**

सकृद् भुज्यत इति उपभोगः, पुनः पुनः [परि]भुज्यत इति परिभोगः, अन्तर्बहिर्भोगौ वा उपभोगपरिभोगौ तयोः परिमाणकरणेन विनिवृत्तिस्तद्गुणव्रतं द्वितीयं भवतीति सम्बन्धः, '**आहाराइ विलयाइयाइ**' तत्राहारश्चतुर्विधः विलया-स्त्री तदादि '**चित्रम्**' अनेकप्रकारं '**यत्र**' यस्माद् '**भणितम्**' उक्तमिति गाथार्थः, उक्तं च-" उवभोगो विगईओ तंबोलाहारपुप्फफलमाई । परिभोगो वत्थसुवण्णाइयं इत्थिहत्थाई ॥ १ ॥ " ॥ भेदद्वारमाह—

**महुमज्जमंसपंचुंबराइ विरइं करेज्ज बिइयंमि । असणविलेवणवत्थाइयाण परिमाणकरणेण ॥ ७५ ॥**

दिक् परिमाणं भोगोपभोग परिमाणं च

मधुमांसमद्यपंचोदुम्बर्यादि, आदिशब्दाद्‌नवनीतघोलवटकरात्रिभोजनादि, विरतिं कुर्यात्, द्वितीयगुणव्रतं उपभोगपरिभोगपरिमाणं, अशनविलेपनवस्त्रादीनां परिमाणकरणलक्षणेऽत्र चातुर्भंगिकं ॥ रात्रिभोजनाविषये कथानकम्—

राईभोयणपरिवज्जणम्मि दिट्ठा इह भवंमि गुणा। परलोगे य तह च्चिय जह वसुदत्ताइयाणं च ॥ १ ॥ उज्जेणी जण्णदत्तो जिणदासो तह य विण्हुदत्तो य। सावयकुलसंभूया ताण य दुहियाओ तिण्णेव ॥ २ ॥ जयसिरिविजयसिरीविय अवराई बालभावजिणधम्मे। अणुगाढरागरत्ता पूयाइसु निच्चमुज्जुत्ता ॥३॥ ताण वयंसी माहणदुहिया वसुदत्तनामिया इट्ठा। आसाढचाउमासे पभायवेलाएँ आयाया ॥ ४ ॥ ताहिं भण्णइ गच्छह सड्ढाणं अज्ज अम्ह जिणपूया। साहुणिपासे अणुव्वयगहणं तो भण्णए तीए ॥५॥ किं तत्थ अम्ह गमणं न जुज्जए ? ताहि सा पुणो भणिया। कल्लाणि ! को विरोहो ? तुमंपि गच्छाहि अम्ह समं ॥६॥ जिणभवणपइट्ठाओ पूयाईयं जिणाण काऊणं। साहुणिपासि नइट्ठा धम्मं सोऊण वसुमित्ता ॥ ७ ॥ सम्मत्तधरी जाया राईभोयणरगंपि से कहियं। जयसिरिमाईहि य पुव्वगहिय उच्चारिय वयाइं ॥ ८ ॥ सगिहं गयाउ ताहे ससुरगिहाओ य आगओ नीए। भोयणवेला वयंसिय पुच्छा गयवद्धणायउरे ॥ ९ ॥ ससुराईहि अभिनंदियाओ चिट्ठइ य किंपि कालंति। नत्ते अभुंजमाणा ससुरेणं भण्णए ताहे ॥ १० ॥ पुत्ति ! न अम्ह कुलक्कम जं निसिभोयण तहेव पसुमंसं। वज्जिज्जइ वेएसुं जं विहियं तं तु धम्माय ॥ ११ ॥ वसुमित्ताए भण्णइ हिंसा वेए विवज्जिया ताव। संभाइसु पियराणंपि उस्सिट्ठं रयणिदाणं तु ॥१२॥ ससुरेण आयरेणं भणियं जइ सासरेण ते कज्जं। ता मुंच आगहं अण्णहा उ कज्जं न चेव तए । १३ ॥ वसुमित्ता चिंतंति य जइ एवं जामि पेइयं सहसा। तो कुलमंडणपुत्ताइ नेमि पयाइ तत्थेव ॥ १४ ॥ वसुमित्ताए भणिया जस्स सगासा निविज्ज मे गहिया। तस्स सम-

**दुविहं तिविहेण गुणव्वयं तु घित्तूण पेसए अण्णं । तल्लाभं वा गिण्हइ तस्स धुवं होइ इह भंगो ॥ ७२ ॥**

'**द्विविधं त्रिविधेन**' योजनविंशतेः परतः स्वयं न गच्छामि नान्यं प्रेषयामि मनसा वाचा कायेन इति दिक्परिमाणं कृत्वा ततोऽन्यं प्रेषयति प्रयोजनोत्पत्तौ, दिग्व्रतातिक्रमे यस्तल्लाभस्त वा गृह्णात्याकुट्टिकया—जानतस्तस्य 'ध्रुवं' निश्चयं भवतीह—व्रते भंगः सर्वव्रताभाव इति गाथार्थः ॥ भावनाद्वारमाह—

**इरियासमियाए परिब्भमंति भूमंडलं निरारंभा । सव्वजगज्जीवहिया ते धण्णा साहुणो निच्चं । ७३ ॥**

ईर्यासमित्या समिताः परि—समन्ताद् 'भ्रमन्ति' स्थानान्तरं संक्रामति '**भूमंडलं**' पृथ्वीतलं '**निरारंभा**' आरंभविवर्जिताः '**सर्वजगज्जीवहिताः**' सर्वे जगति ये जीवास्तेषां हिता ये साधवस्ते '**धन्याः**' पुण्यभाजः '**नित्यं**' सदेति गाथार्थः ॥ उक्तं प्रथमं गुणव्रत, साम्प्रतं द्वितीयगुणव्रतं नवभेदमाह, तत्रापि प्रथमद्वारमाह—

**उवभोगपरीभोगे विणियत्ती तं गुणव्वयं बीयं । आहाराई विलयाइयाइ चित्तं जओ भणियं ॥ ७४ ॥**

सकृद् भुज्यत इति उपभोगः, पुनः पुनः [परि]भुज्यत इति परिभोगः, अन्तर्बहिर्भोगौ वा उपभोगपरिभोगौ तयोः परिमाणकरणेन विनिवृत्तिस्तद्गुणव्रतं द्वितीयं भवतीति सम्बन्धः, '**आहाराइ विलयाइयाइ**' तत्राहारश्चतुर्विधः विलया-स्त्री तदादि '**चित्रम्**' अनेकप्रकारं '**यत्र**' यस्माद् '**भणितम्**' उक्तमिति गाथार्थः, उक्तं च—" उवभोगो विगईओ तंबोलाहारपुप्फफलमाई । परिभोगो वत्थसुवण्णाइयं इत्थिहत्थाई ॥ १ ॥ " ॥ भेदद्वारमाह—

**महुमज्जमंसपंचुंबराइ विरइं करेज्ज बिइयंमि । असणविलेवणवत्थाइयाण परिमाणकरणेण ॥ ७५ ॥**

दिक् परिमाणं भोगोपभोग परिमाणं च

मधुमांसमद्यपंचोम्बर्यादि, आदिशब्दान्नवनीतघोलवटकरात्रिभोजनादि, विरतिं कुर्यात्, द्वितीयगुणव्रतं उपभोगपरिभोगपरिमाणं, अन्ननविलेपनवस्त्रादीनां परिमाणकरणलक्षणेऽत्र चातुर्भंगिकं ॥ रात्रिभोजनाविषये कथानकम्—

राईभोयणपरिवज्जणम्मि दिट्ठा इह भवंमि गुणा। परलोगे य तह चिय जह वसुदत्ताइयाणं च ॥ १ ॥ उज्जेणी जण्णदत्तो जिणदासो तह य विण्हुदत्तो य। सावयकुलसंभूया ताण य दुहियाओ तिण्णेव ॥ २ ॥ जयसिरिविजयसिरीविय अवराई बालभावजिणधम्मे। अइगाढरागरत्ता पूयाइसु निच्चमुज्जयुत्ता ॥३॥ ताण वयंसी माहणदुहिया वसुदत्तनामिया इट्ठा। आसाढचाउमासे पमायवेलाएँ आयाया ॥ ४ ॥ ताहिं भण्णइ गच्छह सद्धाणं अज्ज अम्ह जिणपूया। साहुणिपासे अणुव्वयगहणं तो भण्णए तीए ॥५॥ किं तत्थ अम्ह गमणं न जुज्जए ? ताहि सा पुणो भणिया। कल्लाणि ! को विरोहो ? तुमंपि गच्छाहि अम्ह समं ॥६॥ जिणभवणपइट्ठाओ पूयाईयं जिणाण काऊणं। साहुणिपासि वइट्ठा धम्मं सोऊण वसुमित्ता ॥ ७ ॥ सम्मत्तधरी जाया राईभोयणवयंपि से कहियं। जयसिरिमाईहि य पुव्वगहिय उच्चारिय वयाइं ॥ ८ ॥ सगिहं गयाउ ताहे ससुरगिहाओ य आगओ तीए। मोयावगो वयंसिय पुच्छा गयवद्धणायउरे ॥ ९ ॥ ससुराईहि अभिनंदियाओ चिट्ठइ य किंपि कालंति। नत्ते अभुंजमाणा ससुरेणं भण्णए ताहे ॥ १० ॥ पुत्ति ! न अम्ह कुलम्मि जं निसिभोयण तहेव पसुमंसं। वज्जिज्जइ वेएसुं जं विहियं तं तु धम्माय ॥ ११ ॥ वसुमित्ताए भण्णइ हिंसा वेए विवज्जिया ताव। संभाइसु पियराणंपि उस्सिट्ठं रयणिदाणं तु ॥१२॥ ससुरेण आयरेणं भणियं जइ सासरेण ते कज्जं। ता मुंच आग्गहं अण्णहा उ कज्जं न चेव तए ॥ १३ ॥ वसुमित्ता चिंतंति य जइ एवं जामि पेइयं सहसा। तो कुलकलंकणकाइ नेमि पयाइ तत्थेव ॥ १४ ॥ वसुमित्ताए भणिया जस्स सगासा निविज्ज मे गहिया। तस्स सम-

प्पेमि अहं ससुरसमक्खं न संदेहो ॥ १५ ॥ ससुरो वसुमित्तोविय दोण्णिवि उज्जेणिहुत्तयपयट्टा । जीयहरंमि ट्ठाणे माहणभट्टस्स
गेहम्मि ॥ १६ ॥ तेणवि ण्हाणाईया संझासमयम्मि पिढरगकयम्मि । तिट्टुं (तीमण) कढिज्जमाणे उवरि सप्पेण नेव्वस्स ॥ १७ ॥
उंदरदंसणहेलाए धाविओ वाहिऊण पडिओ सो । तत्तयतीमणमज्झे डोएणं खंडखंडिकओ ॥ १८ ॥ रयणीभूए ताहे वसुमित्ता न
भुंजए तओ ससुरो । माहणभट्टोवि ठिओ असारओ परियणो जिमिओ ॥ १९ ॥ सप्पविसपभावेणं मओ पभाए पहट्टु दंसणओ ।
जायं बहुमाणं से वसुमित्ता उवरि जमभुत्तं ॥ २० ॥ जीयहरणाउ दसउर चाउलदत्तस्स पाविया गेह । पारद्धं कत्तवं रयणी जाया
य ताणं तु ॥ २१ ॥ चाउलदत्तस्स उ तस्स पुत्तो आइच्चसोम स परदाररओ । कुलपुत्तयमहिलाए रत्तो सो पाविओ तेणं ॥ २२ ॥
वेहाणसेण बद्धो ऊरु छेत्तूण दाविय स घरे । महिलं घित्तुं नट्ठो रयणीए अन्नगामम्मि ॥ २३ ॥ तं मंसंमिय सिद्धं वसुमित्ता मंस-
मेलियं रद्धं । न य भुंजइ चाउलेणवि पुत्तो हु गवेसिओ दिट्ठो ॥ २३ ॥ तयवत्थं दट्ठूणं ससुरेण पसंसिया वसुमित्ता । रयणीभत्तं
मंसं अम्हेहि विवज्जियं निच्चं ॥ २४ ॥ सोहणधम्मो लद्धो अम्हे हिवि एस चेव पडिवण्णो । ता गच्छामो सगिहं भत्ता अवि सावओ
जाओ ॥ २५ ॥ विसयसुहं भोत्तूणं कालं काउं तओ य सोहम्मे । देवा तिण्णिवि जाया सासू ससुरा य वसुमित्ता ॥ २६ ॥
चइऊण तओ ससुरो सिरिधम्मो रायउत्तओ जाओ । वसुमित्ता सिरिदेवी सेट्ठिकुलंमी समुप्पन्ना ॥ २७ ॥ सेट्ठी वद्धावणयं कारा-
वइ तंमि दिवसजायाणं । पण्णरस दारियाणं रूववईणं धणो सेट्ठी ॥ २८ ॥ अट्ठवरिसाओ अक्खरकलाओ गाहेइ तत्थुवज्झाओ ।
सासूजीवो चविउं देवजसा ताण मज्झंमि ॥ २९ ॥ सिरिधम्मो देवजसा गहिया कोढेण दोवि कालेणं । देवजसा ण्हाणुद-
एण सिरिदेवीए उ पउणत्त ॥ ३० ॥ सिरिधम्मनिमित्तेणं पिउणा नीणाविओ पडहओ से । देवजसाए छित्तो नेमित्तियवयण-

पउमाए ॥ ३१ ॥ रायं पभणइ नवरं आगच्छउ एत्थ सो कुमारो मे । जेण पउणेमि सहसा आगयमेसे य रंग(वरग)मज्झे॥३२॥ उग्घोसेण पउमो जाओ गिरिदेविसंतएणं तु। जाओ कमा चउदस सह कुमरो राउलं च गओ॥३३॥ रन्ना ताउवि परिणावियाउ पोसे य भुंजए नाहे । वयभंगकारणेणं कुद्धो तासिं समुप्पन्नो ॥ ३४ ॥ राया जाओ रीद्धी पच्छा देवाइसुं भवित्ताणं । मोक्खे गहणं होही एवं संखेवओ कहियं ॥ राईभोयणमंसाणि जाणिउं वज्जणे महापुण्णं । इह लोगे परलोगे सव्वपयत्तेण वज्जेहा ॥ गिरनारो भगिनीवच्छलादवसेयो, असनं—ओदनादि विलेपनं—चन्दनादि कुंकुमादि वस्त्राभरणपुष्पताम्बूलादीनां परिमाणकरणमिति गाथार्थः, तथा चोक्तं—" ण्हाणं पियण विलेवणवत्थाभरणे य बंभचेरे य । अब्भंगणि कुणमाणं कुणा तंबोलपुप्फाई ॥ १ ॥ मज्जं मंसं महु लोणियं च पंचुंबरीयफलनियमं । राईभोयण तह गज्जराई करगाइ मट्टी य ॥ २ ॥ कुलबलमइगरुयत्तणसाहुकाराइ विद्धवविउडणयं । विसयपवाहिविहीलगजणयं मज्जं परिच्चयह ॥ ३ ॥ मंसं पंचिंदियवहविणिम्मियं तह पयंडपावकरं । मुक्करसरुहिरकलमलदुगंधियं मुंच भयजणगं ॥ ४ ॥ चउरिंदियजीवाणं-गदेहरसरुहिरमीसियमभक्खं । महुरसभक्खणयं चिरं च पावं विवज्जेज्जा ॥ ५ ॥ नवणीयं तज्जोणियउप्पण्णाविवण्ण-सत्तसंमीसं । अप्परिणयं विवज्जह होइ एयंपि भयजणयं ॥ ६ ॥ महु मज्जं च मंसं च, नवणीयं च भिक्खुणो । विगइओ न कप्पंति, तव्वण्णा तत्थ जंतुणो ॥ ७॥ उंबर वडं च पिप्पलं काउंबरि तह य पिप्परिफलाइं । मज्झे हवंति जीवा खद्धा य कुणंति वयभंगं ॥ ८ ॥ पल्लंकलट्टसागा मुग्गयं आमगोरसुम्मीसं । संसज्जए उ नियमा तंपि य नियमा हु दोसा य ॥ ९ ॥ निच्चं होन्ति दरिद्दा निच्चूसत्तवज्जिया सिरिविहूणा । कुलबलरूवविहूणा निसिभोयणउज्जया जे उ ॥ १० ॥ साहारणा उ मूला

गज्जरलोणो विगंधि दव्वं च । थोहरि कुमारि अद्दय विरुहाइ अणेगहा जीवा ॥ ११ ॥ फलफलिपत्ते पुप्फे कट्ठे बहुबीयविगइ वग्गे य । सच्चित्ताणं दव्वाण वग्गमाणं च उवभोगे ॥१२॥ रंधण कंडण पीसण दलणं पयणं च एवमाईणं । निच्चं परिमाणकरणं अविरइबंधो जओ गुरुआ ॥ १३ ॥" यथा जायते इति तृतीयं द्वारमाह–

**दुविहतिविहाइ मंसाइयाण एगविह तिविह सेसेसुं । निरवज्जाहाराई अहम्मवित्तीपरिच्चाओ ॥ ७६ ॥**

द्विविधं त्रिविधेन मांसादीनां निवृत्तिः, एकविधत्रिविधादिना मद्यादीनां निवृत्तिः, निरवद्याहारादि ग्रहीतव्यं, अधर्म्मवृत्तिः अंगारवनकर्म्मादिलक्षणा तस्याः परित्यागाकरणमिति । उक्तं च–"निरवज्जाहारेणं निज्जीवेणं परित्तमीसेणं । अप्पा संधारेज्जा कम्मं च चएज्ज सावज्जं ॥ १ ॥ इंगाली वणसाडी भाडी फोडी सुवज्जए कम्मं । वाणिज्जं चेव य दंतलक्खरसकेसविसविसयं ॥ २ ॥ एवं खु जंतपीलणकम्मं निल्लंछणं च दवदाणं । सरदहतलायसोसं असईपोसं च वज्जेज्जा ॥ ३ ॥" इति गाथार्थः ॥ साम्पतं चतुर्थद्वारमाह—

**भोगुवभोगेहिंतो अनियत्ताणं हवंति दुक्खाइं । सेडुवओ य सुबंधू जह निच्चंमंडिया भट्टी ॥ ७७ ॥**

भोगोपभोगेभ्योऽनिवृत्तानां बहुकर्मग्राहित्वेन दुःखानि शारीरमानसानि भवंतीति संटंकः, दृष्टान्तोपचयमाह—

सेडुवकः तथा सुवन्धुः तथा नित्यमंडिता ब्राह्मणीति गाथासंक्षेपार्थः ॥ भावार्थः कथानकेभ्योऽवसेयस्तानि चामूनि–

कौशाम्ब्यां नगर्यां जितशत्रुर्नाम राजा, चण्डप्रद्योतेनोज्जयिन्या आगतेन रोहिता तिष्ठति सा, तत्र च सेडुवकनामा मालाकारः पुष्पाणामानयनाय प्रभाते नगराद्बहिः आरामं गतः यावत् सर्वत्रैव चण्डप्रद्योतनसत्कं सैन्यं स्वदेशाभिमुखं प्रस्थितं

पश्यति स्म, तेन चागत्य शीघ्रं राज्ञस्तत् प्रियं निवेदितं, राज्ञा तुष्टेनोक्तं—विज्ञापय यत् ते रोचते येन प्रयच्छामि, तेनोक्तं—भार्यां पृच्छामि. गत्वा पृष्टा, तया चोक्तं—भोजनं दीनारः कर्णोत्सारकश्च, प्रतिपन्नं च राज्ञा, सर्वलोकानामुत्सारककरणेन बहुमत-श्चासौ लोका भोजनदीनारादिकमुपचारं कृत्वा आत्मीयप्रयोजनानि विज्ञापयंति, स च दीनारलोभेन भोजनमपरिमितं करोति, तेन च कुष्ठव्याधिरुत्पन्नः, पुत्राश्च संजाताः, द्रव्यं च मिलितं, ततश्च महत्तमैरुक्तो—यथा त्वं गृहे तिष्ठ पुत्रा राज्ञः सेवां कर्णोत्सारकं च करिष्यन्ति, ते चातिरिक्तभक्तपरित्यागेन राजपूजिताश्च तिष्ठन्ति स्म, सेडुवकश्च पुत्रैर्बहुभिः परिभूतो निर्वेदं गतः रोषं च, ततः पुत्रानुक्तवान्—यथा अन्त्येष्टिं करोमि मम छगलकं समर्पयथ, तैश्च समर्पितः, स च समीपवर्त्यगोद्वर्त्तनं भङ्ग्या खादयति यावत् स ग्रस्तः कुष्ठेन "कुष्ठं ज्वरश्च शोफश्च, नेत्राभिष्यन्द एव च । औपसर्गिकरोगाश्च, संक्रामंति निरंतरम् ॥१॥" ततो यज्ञं कृत्वा पुत्रादयश्च भुंजापिताः तच्छगलकपिशितं तेन पापेन रोगग्रस्तेन, आत्मना निर्गत्याटव्यां भयभीतो गतः, ततश्च पर्वत-निकुंजे हरीतक्यादिकल्कमासादितं, तृडार्त्तेन च तत् पीतं, तेन च तस्य विरेचनं संपन्नं, कृमिजालानां विनिर्गमनं, पुनरपि पीतं, तेन च तस्य विरेचनं संपन्नं, कृमिजालानां विनिर्गमनं, पुनरपि पीतं यावत् कोष्ठशुद्धिः सम्पन्ना, तदेव तस्यौषधं संजातं, ग्रामे गत्वा पथ्यादिकैः पुनर्नवीभूतः, देवगृहमागतो यावत् पश्यति कुटुम्बकं कुष्ठग्रस्तं, तेन चोक्तं—मम देवताया अपनीतं, युष्माकं मये-तत् कृतं, स च लोकैर्निन्द्यमानो गतो राजगृहं, द्वारपालकसमीपे स्थितः, स च भगवद्वन्दनार्थं स्थितः तं तत्रैव रक्षपालं कृत्वा, स च उंडेरकादिदेवताबलिं प्रभूतां भुक्त्वा विसूचिकया मृतः, तृडार्त्तो वाप्यां शालूरत्वेनोत्पन्नः, जातिस्मरणः संजातः, भगवद्वन्दनार्थं चलितश्च, ततोऽन्तरालेऽश्वखुराहतश्च शुभाध्यवसायो मृत्वा देवलोके देवत्वेनोत्पन्नः, "तित्थयरवंदणत्थं चलि-

ओ भावेण पावए सग्गं । जह दद्दुरदेवेणं पत्तं वेमाणियसुरत्तं ॥ १ ॥" ततो भगवत्समवसरणे श्रेणिकादीनां प्रत्यक्षं कुष्ठरूपं विधाय भट्टारकपादान्तिकमुपविश्य गोशीर्षचन्दनेन पादौ समालभते स्म, श्रेणिकादीनां पूतिरसिकां दर्शयति स्म, क्षुते भगवता मरेत्युक्तं, (श्रेणिकेन जीवेति अभयेन जीव वा मरेति कालिकेन मा जीव मा मरेत्युक्तं,) श्रेणिकेन पृष्टो भगवान्—कः कुष्ठी ?, ततः कथिता सर्ववक्तव्यता सविस्तरा, यदि देवः किमर्थं मरेत्युक्तं, भगवतोक्तं—किं भवे तिष्ठति ? त्वया पुनः नरके गन्तव्यं, अभयकुमारेण देवलोके, कालसौकरिकेन सप्तमपृथिव्यां मृतेन, जीवन्पंचमहिषशतप्राणघातकः, ततो नरकभीतः पुनरप्याह—कथं मम नरके गमनं भवति ?, भगवतोक्तं—यदि तक्रविरतिं तिलकुट्टिविरतीं वा पालयसि, कपिलां वा भिक्षां दापयसि, सौरिकाद्वा महिषान् मोचयसि, सर्वमपि प्रारब्धं, न चैकमपि संसिद्धं, प्रभाते विलक्षीभूत आगतः, आश्वासितो भगवता यथा त्वमागामिनि काले प्रथमतीर्थंकरः पद्मनाभो भूत्वा सेत्स्यसि, ततो मनाक् स्वस्थः संजात इति । सुबंधुकथानकं प्रारभ्यते—

पाटलिपुत्रे नगरे उदायिनृपमरणानन्तरोपविष्टनापितनंदराजान्वयपर्यंते चन्द्रगुप्तराजकुले चाणक्ये महत्तमे स्थापिते नवमनंदसम्बन्धी महत्तमः सुबन्धुनामा निष्कासितः, पुनरपि विन्दुसारराज्येन लब्धप्रसरः समागतः, चाणक्यस्तु वृद्धः संजातः, तथापि विन्दुसारः तं बहु मन्यते । अन्यदा सुबन्धुमहत्तमेनानुपलक्षेण मातृमरणं कथितं, तव माता अनेन उदरविदारणं कृत्वा मारिता, तेन च धात्री माता पृष्टा, तया तदेव प्रतिपादितं, कारणं न कश्चिज्जानाति, ततोऽज्ञातकारणतया रोषं ग्राहितः, प्रभाते अदृष्टिदानादिना अप्रतिपत्तिः कृता, अपमानितो गृहं गतः, पिशुनप्रवेशादिकं कारणं मानुषाणां कथितं, द्रव्यं धर्म्मस्थाने दत्त्वा मानुषाणि धर्मे नियोज्य मारणात्मकान् वासान् विषयोगितान् समुद्गके प्रक्षिप्य मध्ये भूर्जपत्रं निधाय मंजू-

गागामनिग्लनेनापवरकमध्ये निधाय आत्मना गोकरीषोपरि अनशनं प्रतिपद्य पादपोपगमनेन स्थितः, द्वितीयदिने राज्ञा वार्त्तां कृत्वा यथा-चाणक्योऽनशनं प्रतिपन्नः, ततः सुबन्धुना बिन्दुसारः उक्तो यथा पितुर्भक्तमस्य पूजा कर्तुं युज्यते, ततश्चार्यसमीपं गत्वा क्षामितः पूजितश्च राज्ञा, सुबन्धुनापि पुष्पादिपूजां कृत्वा धूपं चोद्ग्राह्याङ्गारस्तत्रैव गोकरीषे प्रक्षिप्तस्तेन च दग्धो मृतश्च देवलोकोत्पन्नः। सुबन्धुनापि गृहं तस्य सम्बधी राजादेशेन गृहीतं, प्रविष्टो यावदपवरक उद्घाटितः मध्ये मंजूषायाः समुद्गको, यावद्वासान् सुगन्धीन् दृष्ट्वा नासिकाग्रे दत्त्वा पश्चाद् भूर्जितं वाचितं यावद् भूर्जार्थोऽवधारितः, वासगन्धमाघ्राय यः स्नानविलेपनताम्बूलपुष्पादिकं करिष्यति यत्यनुष्ठानेन न स्थास्यति स शीघ्रं प्राणाँस्त्यक्ष्यति, ततो मरणभयभीतेन आत्मीयः पुरुष गन्धानाघ्राय स्त्रीसेवादिकं कारितः मृतः, ततश्चिन्तितं म्रियमाणेन मारितोऽहं, प्राणभयभीतः शिरस्तुण्डमुण्डनादिकं कृत्वा स्नानगन्धताम्बूलादि परित्यज्य यतिवत् स्थित इति। "भावं विणा करंतो मुणिचेट्ठं नेव पावइ मोक्खं। अंगारमद्दगो विव भव्वावि सुबंधुसचिवोव्व ॥ १ ॥"

भट्टिनीकथानकम्-एकस्मिन् ग्रामे प्रत्यन्तावस्थिते एका ब्राह्मणी, तया भर्त्ता अभिहितो यथा मम चूडाद्याभरणं कुरु, तेन च भार्येत्याग्रहिणेन सुवर्णकारं भेदे शीघ्रं सुवर्णालंकारा निष्पादिता गृहमानीता, लग्नं निरूप्य हस्तादिषु पिनद्धः, तेन चोक्तं ब्राह्मणेन-यथा प्रत्यन्ते देशे म्लेच्छागमो विशिष्टतिथ्यादावस्य परिभोगः, शेषकाले गर्तादौ प्रक्षिप्य धरणीयः, तया चोक्तं-तस्मिन्नेव क्षणे अपनेष्यामि शीघ्रं, अकस्मात् म्लेच्छाः पतिताः, मांसोपचितहस्तयोरुत्तारयितुं न शक्यंते, हस्तच्छेदं कृत्वा नीतानि तैः म्लेच्छैराभरणानि, अतः सुष्ठूक्तं-परिभोगे नित्यमंडिता ब्राह्मणी विनाशं प्राप्तेति गाथार्थः॥ साम्प्रतं गुणद्वारं पंचमं विवृण्वन्नाह-

**पोग्गलपरिणामं चिंतिऊण भोगेहि जे विरज्जंति । सिवजम्मे जह जंबू वंदिज्जंते बहुजणेणं ॥ ७८ ॥**

पुद्गलपरिणामं अनेकप्रकारं 'विचिन्त्य' सूक्ष्मबुद्ध्या पर्यालोच्य, किंभूतं ? त एव पुद्गलाः शोभनेतराः सुगंधदुर्गंधिरूपाः, संस्कारवशेनातीव हृद्यं निष्पादितं, तथा शोभनाहाराङ्गरागादिशरीरमेलापकवशाद् दुर्गन्धा भवन्ति, मोदकप्रियकुमारवदिति, तथा रूपादिशरीरमतिसुरूपत्वाद्यनेकप्रकाररागादिवशादतः यथा राज्ञा रागान्धेन निरामया देवीति भाण्डस्याग्रतो भाषितमिति, पुद्गलपरिणामः कुशाग्रीयया मत्या पर्यालोच्यः, यथा "उद्वर्त्तितमपि बहुधा लेपितमपि चन्दनादिकैः सद्यः । भजति तथापि शरीरं दौर्गन्ध्यं को मुधा यत्नः ? ॥ १ ॥ तदेव संस्पर्शसुखं, सैव चान्ते विडम्बना । तासु चान्यासु च स्त्रीषु, अथ वेश्यासु को गुणः ? ॥ २ ॥" अतः पुद्गलपरिणामं विचिन्त्य भोगेभ्यः—कामेभ्यो ये पुरुषा लघुकर्माणो '**विरज्यन्ते**' निवर्तन्ते वन्द्याः प्रभूतलोकस्य भवंतीति सम्बन्धः, दृष्टान्तमाह—शिवजन्मनि जम्बूनामवदिति गाथासंक्षेपार्थः । विस्तारः कथानकगम्यस्तच्चेदम्—

राजगृहे नगरे भगवान् समवसृतः, श्रेणिकादयो वन्दनार्थं निर्गताः, पृष्ठचम्पास्वामी प्रसन्नचन्द्रसाधुः सालमहासालपिता अर्द्धपथे दृष्टो वंदितश्च, तेनैव सह सुमुखदुर्मुखाभ्यां वन्दित्वा श्लाघितो निन्दितश्च, मानसिकसंग्रामश्च प्रारब्धः, श्रेणिकेन पृच्छा कृता, विसदृशमुत्तरं लब्धं यावद्देवा आगन्तुं प्रवृत्ताः, कारणं च भगवता कथितं यथा प्रसन्नचन्द्रस्य केवलज्ञानं समुत्पन्नं, ततः श्रेणिकेनोक्तं—कस्मिन् पुरुषे केवलज्ञानव्यवच्छित्तिः ?, भगवतोक्तम्—एतस्मिन् ब्रह्मलोकागतविद्युन्मालिदेवे, श्रेणिकेनोक्तं—कथं देवानां केवलज्ञानं ?, भगवतोक्तम्—सत्यं, किन्त्वस्य सप्तमेऽह्नि च्युत्वा ऋषभदत्तपुत्रत्वेनोत्पन्नस्य केवलज्ञानमुत्पत्स्यते, ते-

नेन व्यवच्छित्तिः केवलज्ञानस्य, ततः पुनरपि श्रेणिकेनोक्तम्—कथं तेजोलेश्या च्यवनकालेऽप्येवंभूता ?, देवानां किल षण्मासावशेषे दीप्तिकान्त्यादयो भ्रश्यन्ते, भगवतोक्तं—पूर्वमनन्तगुणा आसीत्, श्रेणिकेनोक्तं—पूर्वभवे किं तपःकर्म्म कृतं ?, भगवतोक्तं, शृणु—अस्मिन्नेव मगधजनपदे सुग्रामपुरे आर्जवराष्ट्रकूटस्य रेवतीभार्याया भवदत्तभवदेवनामानौ पुत्रौ, तयोरेकः प्रथमो वाणिज्येन दिग्यात्रायां गतः, पश्चिमरात्रौ संसारस्वरूपं चिन्तयतो वैराग्यवासनोत्पन्ना, प्रभाते सुस्थिताचार्या दृष्टाः, पादयोः पतितः, धर्मश्रवणं कृत्वा आत्मीयाभिप्रायं निवेद्य गृहीता दीक्षा, गुरुणा सह विहरति स्म, अन्यदा एकः साधुः सुस्थिताचार्यं पृच्छति—स्वजनान् द्रष्टुमिच्छामि, मम भ्राता कनिष्ठो ममोपरि स्नेहवर्त्ती प्रव्रज्यां यदि गृह्णाति, ततः प्रेषितो, गतोऽधिष्ठाने यावत्तस्य दारिका लब्धा विवाहलग्नं च निरूपितमागतोऽसौ हसितो भवदत्तेन, तेनाप्युक्तं—तवापि कनिष्ठो भ्राता भवदेवोऽस्त्येव, तेनोक्तं—यदि भट्टारकाः सुग्रामपुरे यास्यंति तत एतत् प्रयोजनं सेत्स्यति नवेति ज्ञापयिष्यामि, कालेन सुग्रामपुरे प्राप्ता आचार्याः, भवदत्तोऽपि भिक्षावेलायां गतो गृहं, भवदेवेन नाइणी(गिनी)परिणीता अनुरक्तश्च, ततोऽन्यमुपायमलभमानेन पात्रकव्यग्र आनीतो यावदुद्यानं, प्रव्रज्यां दत्त्वा अन्यत्र प्रेषितः साधुसहायो, नाइणी(गिनी)गतचित्तोऽपि प्रव्रज्यां करोति भ्रातृस्नेहेन, स पश्चाद् भवदत्ते देवलोकं गते गृहीतवेषो गतः सुग्रामपुरं यावद् दृष्टो नागिन्या परिज्ञातश्च, तेन सा न परिज्ञाता, ततो नागिनी जीवति न वेति पृष्टा सा ज्ञाताभिप्राया, तया चोक्तं—गता सा, पुनरप्युक्तं—अहं सा नाइणी(गिनी) व्रतधारिणी, उन्मज्जननिमज्जने कच्छपदृष्टान्तः कथितः, तथा क्षुल्लकदृष्टान्तश्च, अस्मिन्नेवावसरे एकस्या ब्राह्मण्याः पुत्रः क्षीरान्नं भुक्त्वा आगतो, वमनं करोमि करोटकं धारय येनागतः पुनरपि भोक्ष्ये, तयोक्तं—पुत्र! केन वान्तं भुज्यते ?, तच्छ्रुत्वा प्रति-

बुद्धो भवदेव इच्छाम्यनुशासनं श्राविके ! गच्छामि गुरुसमीपं, गत्वाऽऽलोचितप्रतिक्रान्तः सौधर्मे इन्द्रसामानिक उत्पन्नः, इतश्च पुण्डरीकिण्यां नगर्यां वज्रदत्तनामा चक्रवर्त्ती यशोधरा महादेवी तयोः पुत्रत्वेनोत्पन्नो भवदत्तदेवः, सागरदत्त नाम, चक्रित्वं, शरत्काले मेघवृन्दमनित्यतायुक्तं दृष्ट्वा निर्विण्णकामोऽमृतगुरुसमीपे प्रव्रजितोऽधीतागमो गीतार्थः संजातोऽधिपश्च संवृत्तः, विहरन् वीतशोकायां प्राप्तो, मासक्षपणकं चाचार्येण प्रारब्धं, इतश्च भवदेवोऽपि सौधर्माच्च्युतः वीतशोकायां नगर्यां पद्मरथराजस्य वनमालादेव्याः पुत्रत्वेनोत्पन्नः शिवकुमार इति च नाम कृतं, वृद्धिं गतः, यौवनं प्राप्त इति, तस्यां च नगर्यां कामसमृद्धः सार्थवाहो भोजनवेलायामात्मानं निन्दितुमारब्धः, कथं–" अम्हारिसावि मूढा दूरं पम्हुट्ठमच्चुसंतासा । अयरामरव्व लोए करेंति अत्थज्जणं पुरिसा ॥ १ ॥ अगणियसीउण्हलया जलहिं लंघंति अत्थलोभेण । गज्जंतवारणघडे केई पविसंति समरंमि ॥ २ ॥ किं तेहिं आसहेहिं भोयणपाणेहिं अब्भुएहिं च । अच्चंतमणहरेहिं जाइं न दिज्जंति साहूणं ॥३॥ किं तीएँ संपयाए जा नवि साहूण जाइ उवओगं । संसारवड्ढणीए पयणुयसत्ताण दइयाए ॥ ४ ॥ एवं जाव मणेणं चिंतेमाणो उ अच्छए इण्हि । मासस्स पारणाए सागरदत्तो यती पत्तो ॥५॥ जणयसमो सो दिट्ठो हरिसभरिज्जंतलोयणसुहेणं । अब्भुट्ठिओ य तुरियं बंधववग्गेण तो सहिओ ॥ ६ ॥ मासस्स पारणाए कामसमिद्धेण सत्थवाहेण । पडिलाभिओ य विहिणा फासुयएसणियदाणेण ॥ ७ ॥ वुट्ठं च देवेहिं हिरण्णवासं, तत्थेव गंधोदयपुप्फवासं । दव्वस्स सुद्धी परिणामसुद्धी, पत्तस्स सुद्धी अणुरूवमेयं ॥ ८ ॥ अत्रान्तरे कामसमृद्धसार्थवाहगृहे सागरदत्ताचार्यः मासक्षपणपारणके प्रविष्टः, तेन चातीवानुग्रहबुद्ध्या प्रतिलाभिते हिरण्यवृष्ट्यादि पतितं श्रुत्वा लोका आगताः, शिवकुमारोऽपि राजपुत्रस्तत्रैवागतो, दृष्ट्वा चातीवस्नेहानुरागः संवृत्तो, भगवंस्तवोपरि ममातीव स्नेहानुरागः, आचार्येण भवदत्त-

भवदेवसम्बन्धी देवलोकादिपूर्वभवः सविस्तरः कथितः, ततः शिवकुमारस्य जातिस्मरणमुत्पन्नं, अतीव मुमुदे, उक्तं च–भगवन्! यावत् मातापितरावापृच्छामि तावद् (भवद्भिरत्रैव स्थेयं)युष्मदन्तिके प्रव्रज्याङ्गीकरणेन सफलं मनुजत्वं करिष्ये, अविघ्नं (भवतु) देवानुप्रिय !, गतो राजभवनं, पद्मरथराज्ञः वनमालायाश्चात्माभिप्रायः कथितः, तैश्चातीव गाढं स्नेहातुरैः बहिः प्रचारोऽपि निरुद्धः, तेन चान्तःपुरस्थेनैवाहारग्रहणं परित्यक्तं मौनं च कृतं, ततः पितुर्महान् शोकः संवृत्तः कुमारमौनाश्रयणेन, तेन च दृढधर्म्मनामा श्रावक आगमकुशल आहूयितः,वृत्तान्तश्च सर्वोऽपि कथितः सविस्तरः, साम्प्रतं यथाऽऽहारग्रहणं करोति जल्पति च कुमारः तथा कुरु, मुक्तकल्पारिता तवान्तःपुरे,ततो नैषेधिकाः कृत्वा प्रविश्य ईर्यापथिक्याः प्रतिक्रम्य द्वादशावर्त्तवन्दनकं दत्त्वा भुवं प्रमृज्यानुजानीथेति भणित्वा निषण्णः, ततः शिवकुमारेणोक्तम्–यत् साधूनामनुष्ठानं क्रियमाणं मया दृष्टं तत्त्वया मम कृतं तत् कथं न विरुध्यते ?, दृढधर्मेणोक्तम्–भावयतिः, किमर्थं त्वया मौनं गृहीतमाहारपरित्यागश्च ?, शिवकुमारेणोक्तम्–मया सावद्ययोगविनिवृत्तिः यावज्जीवं कृतेति, तेनोक्तम्–तवाहमेवंस्थितस्यापि निरवद्याहारादिना वैयावृत्त्यं करोमि, सर्वज्ञागमनिपुणः कल्पाकल्पविधिज्ञः सामाचारीकुशलः, तेन च तत् प्रतिपन्नं तद्वचो, गत्वा कथितं दृढधर्म्मेण पद्मरथादीनां, तैश्च कृतं वर्द्धापनकम्, एवं द्वादश वर्षाणि तेन निरवद्यवृत्त्या ब्रह्मचारिणाऽन्तःपुरस्थितेन वर्द्धमानपरिणामेनागमविचारं कुर्वता तपः कृतमन्तेऽनशनं कृत्वा तपःप्रभावात् ब्रह्मलोके महाद्युतिर्देवः सञ्जातः, ततः उत्पन्नमात्रः स्नानादि कृत्वा जिनभवनं गतः, चतुर्देवीसमन्वितः इहागतश्च्यवनकाले, सप्तमदिवसे अस्मिन् राजगृहे उसभदत्तगृहे नैमित्तिकसिद्धपुत्रसूचितो जंबूनामा भविष्यति, अष्टौ कन्यकाः परिणेष्यति, ताश्च हस्तिकडेवरादिभिरुदाहरणैः प्रतिबोध्य प्रभवादिचौरपंचशतवृतः प्रव्रज्यां गृहीत्वा केवलज्ञानं

चोत्पाद्य सिद्धिं यास्यति, अनेनैव केवलज्ञानव्यवच्छित्तिः,उक्तं च–"मण[1] परमोहि[2] पुलागे[3] आहारग[4] खवग[5] उवसमे[6] कप्पे[7]। संजमतिय[8] केवलि[9] सिज्झणा[10] य जंबुंमि वोच्छिन्ना ॥१॥" एतच्च श्रुत्वा जम्बूद्वीपाधिपतिः जंबूवृक्षाधिष्ठानो नर्तितुं प्रवृत्तः त्रिपदीं कृत्वा अहो मम कुलमुत्तममिति, श्रेणिकेनोक्तम्–किमेष देवो नर्त्तितुं प्रवृत्तो ?, भगवतोक्तम्–अयमृषभदत्तभ्राता जिनदत्त-नामाऽऽसीत्, द्यूतव्यसनी पृथक् कृतः, अन्यदा द्यूतकारेण क्षुरिकया हतः, तत उसभदत्तेन गृहे नेतुमारब्धो, न गतः, मृत्वा व्यन्तरोऽनादृतनामा उत्पन्नः, जम्बूवृक्षकृतालयो जम्बूद्वीपाधिपतिः, अस्य भ्रातृव्यो जम्बूनामा भविष्यति तेन तुष्टिरुत्पन्ना, अनेन कारणेन नर्त्तितमिति, ऋषिमुनिचरिताद् विस्तरार्थो बोद्धव्यः, "करिसग हत्थिकडेवर वानर इंगालदाहग सियाले। विज्जाहरे य धमगे सिलाजऊ दो य थेरीओ ॥ १ ॥ अस्से गामउडसुए वडवा तह चेव सुद्धसउणे य। तिन्नि य मित्ता माहणसुया य ललियंगए चरिमे ॥ २ ॥" साम्प्रतं यतनाद्वारं षष्ठमाह–

**जत्थ बहूणं घाओ जीवाणं होइ भुंजमाणम्मि। तं वत्थुं वज्जिज्जा अइप्पसंगं च सेसेसु ॥ ७९ ॥**

यत्रोपभोगे प्रभूतानां 'घातो' विनाशो 'जीवानां' सत्त्वानां 'भवति' जायते 'तद्वस्तु' त्रससंसक्तफलादि 'वर्जयेत्' परिहरेत्, 'अतिप्रसङ्गम्' अतीवासक्तिं च 'शेषेषु' अनल्पपापेष्वपीति गाथार्थः॥ अधुना अतिचारद्वारमाह–

**सच्चित्तं पडिबद्धं अपोलि दुप्पोलियं च आहारं। तुच्छोसहीण भक्खणमिह वज्जे पंच अइयारे ॥ ८० ॥**

'सच्चित्तं' मूलकन्दादि 'प्रतिबद्धं' तत्प्रतिबद्धं वृक्षस्थं गुन्दपक्कफलादि 'अपोलियदुप्पोलियं' ति अपक्वदुष्पक्वौषधीः, अपक्वौषधयः दुष्पक्वौषधयश्च, अपक्वा–अस्विन्नास्ता यथा तिलपर्पटिकाकन्धरिकादयः, दुष्पक्वं–मन्दपक्वं

फलभोगणयलगोधूमस्थूलमण्डकाकंकटकादि, तुच्छौषधीनां भक्षणं, तुच्छा—असारा औषधयः, एकाभिर्बहुभिर्भक्षिताभिरल्पा तृप्तिर्भवेत्सुनक्लादिफलीप्रभृतिभिः, सिंगाखायगो उदाहरणं, एवंभूतं यदाहारजातमन्यदपि तद् वर्जयेत्, यद्वा अशनेऽनन्तकायसम्मिश्रं पाने मद्यादिपानं स्वादिमे संसक्ततांबूलपत्रादि, अतिचाराश्च कस्यचित् केचन, विचित्रत्वाद् व्रतस्येति गाथार्थः ॥

भङ्गद्वारमाह—

**दुविहं तिविहेण गुणव्वयं तु घित्तूण देइ उवएसं । अहियं वा परिभुंजइ जाणंतो तो भवे भंगो ॥ ८१ ॥**

द्विविधं त्रिविधेन गुणव्रतं मद्यरात्रीभोजनादीनां गृहीत्वा य उपदेशं तद्विषयं विधत्ते—अन्यस्मै ददाति, यथा मद्यं पिब, रात्रौ भोजनं कुरु, अधिकं वा प्रमाणातिरिक्तं जानन् गृह्णाति भुङ्क्ते व्रतातिचारनिरपेक्षः, तस्य भंगो भवतीति गाथार्थः ॥

भावनाद्वारमाह—

**मलमइलजुन्नवत्थो परिभोगविवज्जिओ जियाणंगो । कइया परीसहचमुं अहियासंतो उ विहरिस्सं ॥८२॥**

मलेन मलिनं मलमलिनं 'जीर्णं' च पुरातनं च तत् 'वस्त्रं' वसनं मलमलिनवस्त्रः तथा स्त्र्यादिपरिभोगेन विवर्जिता जितमन्मथः, तथा जितानंगः कामभोगरहितः 'कदा' कस्मिन् काले 'परिषहचमूं' क्षुधादिपरीषहसेनां 'अध्यासयन्' सहन् नैष्कल्पमकुर्वन् 'विहरिष्ये' पर्यटिष्यामि ?, कदा सुसाधुक्रियायुक्तो गुरुभिः सह संयमानुष्ठानेन चर्यां करिष्यामीति भावनेति गाथार्थः ॥ उक्तं नवमद्वारं, तत्प्रतिपादनादुपभोगपरिभोगाख्यं द्वितीयं गुणव्रतं । साम्प्रतमनर्थदण्डाख्यं तृतीयं गुणव्रतं, तथापि प्रथमद्वारमाह—

**धम्मिदियभोयणट्ठा जं कज्जं तं तु होइ अट्ठाए । विवरीयं तु अणट्ठा तव्विरइ गुणवयं तइयं ॥ ८३ ॥**

धर्मार्थं–चैत्यगृहकरणादौ इंद्रियार्थं भोजनताम्बूलादौ भोजनार्थं कृषिवाणिज्यादौ यत् 'कार्यं' पापानुष्ठानं क्रियते तदर्थाय, यत् पुनस्त्रयाणामेकमपि न साधयति तदनर्थाय, तृणलताकर्त्तनकृकलासमारणादिवत्, अस्य अनर्थदण्डस्य या विरतिस्तद् गुणव्रतं तृतीयं स्वरूपेणेति गाथार्थः ।

भेदद्वारमाह–

**पावोवएसहिंसप्पयाण अवज्झाण गुरुपमायरियं । भेया अणत्थदंडस्स हुंति चउरो जिणक्खाया ॥ ८४ ॥**

पापोदेशेन यथा कृष्यादि कुरु बलीवर्दो दम्यतां वीवाहादि कुरु, हिंस्रप्रदानं नाम खड्गधनुःकुठारदात्रकुश्यग्न्यादिप्रदानं, अपध्यानाचरितं नाम आर्त्तरौद्रचिन्तानुरूपं यथा मम लक्ष्मीर्भवतु भोगादिकं सम्पद्यतां वैरिको वा म्रियतां शोभनं वा सम्पन्नं यदेष वैरिको मृत इति, प्रमादाचरितं नाम घृतगुडतैलादिदुःस्थगनादिकरणं मद्यद्यूतव्यसनादि च, भेदा अनर्थदण्डस्य भवंति चत्वारो '**जिनाख्याताः**' सर्वज्ञप्रणीताः । एतेषु उदाहरणानि । तत्र पापोपदेशे उदाहरणम्—

अरिमर्दनराज्ञा तडागः कारापितः, तत्रोदकं न तिष्ठति, तेन चानेके उपाया कृताः, केनचित् न प्रतीकारः संजातः । अन्यदा एकः कश्चिन् नैमित्तिकः समायातः, स च राज्ञा पृष्टः–केनोपायेनोदकं स्थिरं भवति ? तेनोक्तम्–ईदृशः पुरुषोऽस्मिन् स्थाने दीयतां यो ब्राह्मणः कपिलकेशो वक्रनाशः विषमदन्तः बृहत्कर्णश्च, राज्ञा नियुक्ता पुरुषाः, न कश्चित्तादृशो लब्धः पुरुषः, अपरेणोक्तम्–एष एव नैमित्तिकः कपिलभिक्षुरेवंभूतः, ततो राज्ञा स एव तस्मिन् स्थाने निहतोऽतो हितं वाच्यम्, अहितं न वाच्य-

मिति । हिंसाप्रदानं नामायुधविषाग्न्यादि स्वतः परतो वा, तत्र विषविपाकोदाहरणं—बहुभिश्चौरैर्गोधनं प्रभूतं परदेशे गत्वा गृहीतं; ततः स्वदेशं प्राप्ताः, ततः केचन ग्रामं मद्याय गतास्तैस्तत्रैव विषमर्द्धं प्रक्षिप्तं, ये तु तत्रैव स्थितास्तैस्तत्रैव मांसे अर्द्ध-राते मधुरकं प्रक्षिप्तं, परस्परं मारणबुद्ध्या रात्रौ गोष्ठी कृता, अन्योऽन्यविषेण मृताः, येषां पुनः रात्रौ भोजननिवृत्तिरासीत् तेषां तत् सर्वं गोधनं संजातमिति । अग्निदृष्टान्तः—श्रावस्त्यां नगर्यां जितशत्रुपुत्रः स्कन्दः कुमारः, पुरन्दरयशा च भगिनी, कुम्भकारकटम्मि दंडकिराजा परिणीता, अरिमर्दनराज्ञः सभायां स्कन्देन अन्यदा पालकनामा पुरोहितो नास्तिको जितः शत्रुभावमागतः, कुमारोऽपि मुनिसुव्रतस्वामिपार्श्वे संजातवैराग्यो राजपुत्रपंचशतपरिवारः प्रव्रजितः यावद् गीतार्थः सन् आचार्यपदे स्थापितः, तेन तस्यैव शिष्या दत्ताः, अन्यदा स्वामी पृष्टः, प्रतिबोधयाम पुरन्दरजसादिवर्गम्, उक्तं मुनिसुव्रतस्वामिना—प्राणान्तिकोपसर्गस्तत्र तत्र, आचार्येणोक्तं—आराधका न वेति, त्वां मुक्त्वा शेषा आराधकाः, ततो गतः, पालकेनापि तदागमनं श्रुत्वा साधुयोग्य उद्यानेऽनागतमेवायुधानि निक्षिप्तानि, विकाले प्राप्ताः, पुरन्दरजसा तदागमनेनानंदिता, प्रभाते पुरन्दरजसा समागता कंबलरत्नमाचार्याय दत्तं, निषद्यापादपुंछनकानि कृतानि, राजकुले प्राप्तेन पालकेनोक्तं—एष व्रतपराभग्नस्तव राज्यग्रहणार्थं पुरन्दरजसासंकेतेन आगतो, निक्षिप्तायुधैः प्रतीतिरुत्पादिता, ततस्तस्यैवादेशो दत्तो यथा अस्य भ्रष्टाचारस्य यथोचितं कुरु, तेन च पापात्मना रानानेन पुरुषयंत्राणि नीत्वा पीलिताः, आचार्यस्तु सर्वेषां नमस्कारादिसमाधिमुत्पादयति, पर्यन्ते आचार्येण क्षुल्लकं त्यक्त्वा मां प्रथमं यंत्रे प्रक्षिपेत्युक्तं, तेन स एव क्षुल्लकः प्रक्षिप्तः, विस्मृत आत्मा, क्रुद्धः, रे पापिन्! एतदपि मद्वचो न कृतं, निदानं कृतं, अग्निकुमारेषूत्पन्नः, ते च सर्वेऽप्यन्तकृतकेवलिनः संजाताः, प्रभातसमये रजोहरणं सकुलिकया रुधिरदिग्धं हस्त-

भ्रान्त्या गृहीतं, पुरन्दरजसाऽग्रतो भवने पतितं, दृष्ट्वा चिन्तितं–नास्ति कुशलं साधूनां, मुनिसुव्रतस्वामी मम गुरुर्देवतया नीता, तच्च देवेन नगरं अग्निना सर्वं दग्धं, दण्डकारण्यं जातमिति । नादेयानि न देयानि, पंच द्रव्याणि पण्डितैः । अग्निर्विषं तथा शस्त्रं, मद्यं मांसं च पंचमम् ॥ १ ॥ अणथोवं वणथोवं अग्गी थोवं कसाय थोवं च । न हु भे वीससियव्वं थोवंपि हु तं बहुं होइ ॥ २ ॥" अपध्यानाचरिते आर्त्तरौद्रचिन्तनरूपे कथानकानि श्राविकायाः, केनचिन्महिषीरक्षपालेन वारके दुग्धं लब्धं, तेन स्वकीयपादान्तिके धृत्वा चिंतितं–प्रभाते घृततक्रविक्रयेण रूपका भविष्यंति, बलीवर्द्दग्रहणादिना कृषिः, पुनर्धान्यसंग्रहः, पश्चाद्भार्याविवाहनं, चित्रसालिका, पुत्रोत्पत्तिः, प्रभूतगोधनसंग्रहः कर्म्मकराः पश्चाद् दुग्धवेलायां पत्नीपुत्रोत्पत्तिः खट्वायां स्थितस्य बालकं पुत्रं समर्प्य गमिष्यत्यहं पाष्णिप्रहारं दास्यामि, तदावेशेन दत्तदुग्धपट्टिका भग्ना, एवंभूतोऽनर्थाध्यवसायः । "अट्टेण तं न बंधइ जमणट्ठाए य बंधए जीवे । अट्ठे कालाईया नियामगा नो अणट्ठाए ॥ १ ॥" रौद्रापध्यानाचरिते कश्चित् कोंकणार्योऽगीतार्थः ऋजुर्ज्येष्ठाषाढयोरतिमारुते वाते सति ऊर्द्धजानुरधोशिरः चिंतयति–यदि मम पुत्रा नालस्यं कुर्वंति अग्निदाघं प्रयच्छंति एवंभूतेन मारुतेनेदानीं क्षेत्रादिसामग्री तेषां शोभना भवति, ततः साधवश्चिंतयंति,–किंचित् शोभनं चिन्तयति, आचार्यैः क्षणादालप्तः–किं चिंतितं ?, देवलोकादिविषयं ?, कोंकणार्येणोक्तम्–इदं अग्निदाहादिकं चिंतितं, साधुभिर्निवारिते मिथ्यादुष्कृतं दत्तमिति ॥ गुरुप्रमादाऽऽचरितं नाम द्यूतविषयादि, अतिविषयलाम्पट्ये कथानकम्–कश्चित् वणिक्पुत्रो वेल्लहलो नाम वेश्यासक्तः, तेन सर्वं द्रव्यं कुन्दकलिकया वेश्यया भक्षितं, अवसाने गृहान्निष्कासितः, पुनरपि दुष्टकर्मकरणेन रूपकास्तेन मेलिताः, पुनः विकालवेलायां स्नानाङ्गरागवस्त्रताम्बूलगन्धादिसामग्रीयुक्तश्चलितस्तद्गृहाभिमुखं

येल्लुकको दृष्टः, कुन्दकुल्लिकामात्रा, गृहीता रूपकाः प्रवेशितश्चाभ्यन्तरे, तया च पूर्वमेव राजपुत्रसम्बन्धिनी भाटिर्गृहीता, अत्रान्तरे स राजपुत्रः प्रविष्टः, तेन स येल्लुकको दृष्टः, पर्यंके उपविष्टः, ततः पुरुषैर्गृहीतः, पुनरपि पुष्पसमन्विताः केशा अपनीताः नासिकां कर्णौ च छित्वा वर्चोनिष्कासनस्थाने प्रक्षिप्तः। एवमादिकां विडम्बनां कामी प्राप्नोति, अथवा हेमकुमारइन्द्रमहिपालिकादयो बहवो दृष्टान्ताः, परिणीताः, अतिविषयासक्तया धातुक्षयः संजातो, नपुंसकश्च, इत्यादीनि कामिनां दुःखानि, तथा च 'तदेव संसारसुखं, येन नान्ते विडम्बना। तासु चान्यासु च स्त्रीष्वथ च वेश्यासु को गुण ?॥१॥ अधोमुखैकदंष्ट्रेण, जघनान्तरवर्त्तिना। गर्भस्थानिकितमेन, जगद् दष्टं भगाहिना ॥२॥ प्रस्वेदमलदिग्धेन, श्रावता मूत्रशोणितम्। दुर्गंधविकृतेनेह, व्रणेनान्धीकृतं जगत् ॥ ३ ॥" तथा कषायप्रमादेनापि महान् अनर्थः, 'कोऽन्यः कृतघ्नोऽस्त्यखिलेऽपि लोके, यथा कषायाः कलुषस्वभावाः। य एव तानाश्रयति प्रयत्नात्, क्षिपंत्यगाधे व्यसने तमेव ॥ १ ॥ रामेण भूः क्षत्रियवर्गवर्जिता, सुभूमराजेन च निर्द्विजा कृता। तस्मात् कषाया भवगर्तपाते, ह्यनन्तिके प्राणिनमानयन्ति ॥२॥ "गुणसेणअग्गिसम्माणं, सेणियकोणियाण य। गंगदत्तस्स वुत्तंतं, सोच्चा रमन्ति पमायरे ॥ १ ॥" अनेके दृष्टान्ताः, अत्र संक्षिप्तत्वाच्छास्त्रस्य न लिखिता इति। यथा जायते तृतीयद्वारमाह–

दट्ठूण दोसजालं अनत्थदंडंमि न य गुणो कोऽवि। तव्विरई होइ दढं विवेगजुत्तस्स सत्तस्स ॥ ८५ ॥

दृष्ट्वा दोषसमूहं अनर्थदण्डविषयं, नच गुणः कश्चिदनर्थादेव, अतस्तद्विरतिः–अनर्थदण्डविरतिः 'दृढम्' अत्यर्थं 'भवति' जायते. कस्य ? 'विवेकयुक्तस्य' कषायादिविपाकज्ञस्य सत्त्वस्य–प्राणिन इति गाथार्थः ॥

दोषद्वारमाह–

**रागद्दोसवसट्टा दुद्दन्तुम्मत्तजायवकुमारा। खलियारिऊण य मुणिं निरत्थयं ते गया निहणं ॥ ८६ ॥**

'रागद्वेषवशार्त्ताः' रागद्वेषवशगता दुर्दान्ताश्च ते उन्मत्ताश्च दुर्दान्तोन्मत्ताः ते च ते यादवकुमाराश्च—दशारवंसजाः 'खलीकृत्य' उपद्रवं कृत्वा मुनेर्द्वैपायनाख्यस्य निरर्थकं मद्यपानमदाविह्वलास्ते गता 'निधनं' नगरीलोकदाहादिकं इति संक्षेपार्थः॥ विस्तरार्थः कथानकगम्यस्तच्चेदम्—

द्वारवत्यां (द्वारिकायां) नगर्यां कृष्णबलभद्रनामानौ वसुदेवपुत्रावास्तां, नेमिकुमारश्च समुद्रविजयपुत्रो लघुभ्राता, कालेन गृहीतं व्रतं, केवलज्ञानं च चतुष्पंचाशत्दिनैरुत्पन्नं, त्रीणि च शतानि कुमारकालः, अन्यदा विहरन् द्वारिकापुर्या बहिर्वर्त्तिनि रेवतकाभिधाने उद्याने समवसृतः, वन्दनार्थमागतेन कृष्णेन पृष्टः—भगवन्! अस्य द्वारिकापुर्या धनकनकसमृद्धायाः कस्य सकाशाद्विनाशः?, मम च कस्य पार्श्वान्मृत्युः?, कियता कालेन?, भगवतोक्तम्—मद्यकारणात् द्वैपायनऋषेः सकाशाद् द्वादशवर्षेभ्यो, विनाशश्च तव जरत्कुमारात् कौशाम्बवने, ततो वासुदेवेन पटहकोद्घोषणापूर्वकं नगरे सर्वलोके कथित एष वृत्तान्तः, उपयुक्तश्च, मद्यानि पर्वतनिकुंजेषु प्रक्षिप्तानि, पद्मावती पंचशत परिवारा प्रव्रजिता, तच्छ्रुत्वा अन्ये बहवो यादवकुमाराः प्रव्राजिता अरिष्टनेमिपार्श्वे, द्वैपायनोऽपि देशान्तरं गतः, जरत्कुमारोऽपि वनवासे कालावधिं पूरितवान्, द्वादशवर्षोपरि लोको मुत्कलचारी सम्पन्नो यथाऽस्माभिस्तपसा निर्जितोऽपायः, स च द्वैपायनो निकटवर्त्ती संवृत्तः, तैश्च क्रीडनार्थं गतैः पर्वतनिकुंजेषु सुरा उत्कर्षयुक्ता दृष्टा पीता च, मदविह्वलीभूतैर्द्वैपायनो दृष्टः, खलीकृतश्च, रोषं ग्राहितः, कृतनिदानश्च, कृष्णेन ज्ञातव्यतिकरेण बलभद्रसहायेन गत्वा क्षमापितः, कुमाराणां सम्बन्ध्यपराधो क्षम्यतां, तेन च मौनं कृतं, युवयोः

कृत इति संक्षेपकथानकं, विस्तरो वसुदेवहिण्ड्यां ।

अधुना गुणद्वारम्—

जे पुण अणत्थदंडं न कुणंति कयंपि कहवि निंदंति । ते अंगरक्खसड्ढो व्व सावया सुहनिही होंति ॥ ८७ ॥

ये पुनरनर्थदण्डं न कुर्वन्ति, कथंचित् कृतं स्वतः परतो वा ततो निन्दंति, अविवेकाद्नुपयुक्तैर्वा, एतत् पापानुबन्ध्यनुष्ठानमस्माभिरनुष्ठितं, अंगरक्षश्रावकवत् सुखनिधानं श्रावका भवन्तीह परत्र चेति गाथासंक्षेपार्थः ॥ भावार्थः कथानकगम्यस्तच्चेदम्—

पृथ्वीप्रतिष्ठितनगरे अरिदमनो नाम राजा, गुणपालचन्द्रपालनामानौ अंगरक्षौ सम्यग्दृष्टिमिथ्यादृष्टी, खड्गव्यग्रकरावास्ताम्, अन्यदा राजा विजययात्रार्थं कटकनिवेशं कृत्वा नगराद्बहिर्व्यवस्थितः, तत आकस्मिककटकलोकगमनसम्भ्रमे तयोः खड्गौ तत्रैव विस्मृतौ, अर्द्धपथे गतानां स्मृतिमागतौ, तयोर्जल्पः सम्पन्नः, ततो मिथ्यादृष्टिनोक्तम्—राज्ञः प्रसादेन नास्माकं किंचिदूनं, जिनपालेन चिन्तितं—पंचेन्द्रियवधाय खड्गो महानतर्थोऽयुक्तमस्माकं एतद्धरणं, ततो गतो गवेषितः सर्वत्र, न लब्धः, तत आत्मीयपरिग्रहाद् व्युत्सृष्टः, तौ च तत्र स्थाने दर्शकौ, आगत्य (अ)गृहीत्वा नगरे प्रविष्टौ, वन्दिग्रहणेन राजपुत्रः प्रारब्धः, तेन च सह वन्दिकानां मरणं सम्पन्नं, नामाङ्कितौ जिनपालचन्द्रपालसम्बन्धिनौ दृष्ट्वा प्रच्छन्नौ कृतौ, राज्ञः प्रेपितौ, पुत्रमरणादिका च वार्त्ता कथिता, खड्गौ च दृष्टौ, ततो जिनपालश्रावकः प्रथममुक्तो-गृहाणात्मीयं खड्गं, तेनोक्तं—न मदीयं, कथं? व्युत्सृष्टत्वाद्, वार्त्ता च कथिता, पूजितश्च, मिथ्यादृष्टिना च गृहीतमविचारितं, प्रमादीति कृत्वा दंडितः, ततो मुक्तेष्वपि शरीरेषु व्युत्सर्जनादावुपयोगः कर्त्तव्य इति ।

अधुना यतनाद्वारमाह–

कज्जं अहिगिच गिही कामं कम्मं सुभासुभं कुणई । परिहरियव्वं पावं निरत्थमियरं च सत्तीए ॥ ८८ ॥

'कार्य' प्रयोजनं 'अधिकृत्य' अङ्गीकृत्य 'गृही' गृहस्थः 'कामम्' अत्यर्थं 'कर्म्म' कृषिवाणिज्यादिकं 'शुभाशुभं' शुभं–चैत्यभवनादि अशुभं–चण्डिकायतनादि अथवा शुभं–सुवर्णरत्नकुंकुमादि अशुभं–मद्यमधुशस्त्रकुशकुर्वीकंकतकनालिकेरकटाहका- दिलक्षणं 'करोति' विधत्ते, तथापि परिहर्त्तव्यं पापं–मधुमधुरकादिविक्रयं निरर्थकं सर्वथा, इतरथा सार्थकं 'यथाशक्त्या' शक्त्यनतिक्रमेण, लघुगुरुपर्यालोचनेनेति गाथार्थः ॥ अतिचारद्वारमाह–

कंदप्पं कुक्कुइयं मोहरियं तहयचित्त अहिगरणं (संजुयाहिगरणं च)। उवभोगे अइरेगे पंचइयारे परिहरेज्जा ८९

कन्दर्पः केलिहासोन्मिश्रको नर्म, कौकुच्यं भाण्डादीनामिव मुखनयनवचनगतानेकप्रकारा विडम्बना, मौखर्य–मुखरता धाष्टर्यादिगतयासम्बद्धासत्प्रलापित्वं, तथा चित्राधिकरणं शकटकुठारमुसलवर्द्धधनुःखड्गादीनां संयुक्तानां धरणमेको ह्यतिचारः, उपभोगेऽप्यतिरेकः–पुष्पस्नानाङ्गरागताम्बूलादीनामतिरिक्तानां ग्रहणेऽतिचारः, अतः पंचाप्यतिचारान् परिहरेदिति गाथार्थः ॥

भंगद्वारमाह—

कंदप्पाइ उवेक्खा कुणंतो अइकिलिट्ठपरिणामो । पावस्सुदएण गिही भंजइ एयं अविण्णाणो ॥ ९० ॥

कन्दर्पादीनुपेत्य–आकुट्टिकया कुर्वन् अतिसंक्लिष्टपरिणामः–व्रतभङ्गातिचारनिरपेक्षः पापस्योत्कटोदयेन 'गृही' गृहस्थः भनक्त्यनर्थदण्डव्रतमेतदविज्ञानः–सज्ज्ञानरहित इति, तस्माद् व्रतविषये सोपयोगेन भाव्यमिति गाथार्थः ॥

भावनाद्वारमाह–

चिंतंति करंति सयंति जन्ति जंपंति किंपि जयणाए । तसु(सयउ)वउत्ता सम्मं जे ते साहू नमंसामि ॥९१॥

ये साधवश्चिन्तनाद्युपयुक्ताः पर्यालोच्य जल्पनादिक्रियां कुर्वंति तान् प्रणमामीति क्रिया, चिंतनं किमहं शुभं एतच्चिन्तया-म्यशुभं वा?, तथा 'करोमि' निष्पादयामि, तथा शयनक्रियां किं विधानेनाविधानेन वा?, तथा गच्छंति त्रसादिरहितेन पथा तत्सहितेन वा?, कालेन अकालेन वा?, जल्पन् सावद्यं निरवद्यं वा?, एतत् सर्वं सम्यगालोच्य 'यतनया' आगमोक्तेन विधानेन, तान्नमस्करोमीति गाथार्थः । उक्तमनर्थदण्डगुणव्रतं तृतीयं, तदभिधानाच्च समाप्तानि गुणव्रतानि, साम्प्रतं शिक्षाव्रतानि शिक्षापदानि वा विभणिषुराह– तत्रापि प्रथमं सामायिकाभिधानं नवभेदं व्रतमाह, प्रथमं द्वारं–

सावज्जजोगवज्जण निरवज्जस्सेह सेवणं जं च । सव्वेसु य भूएसुं समयाभावो अ सामइयं ॥ ९२ ॥

'सावद्ययोगवर्जनं' सपापव्यापारपरिहारं निरवद्यस्येह पठनादेरासेवनम्–अभ्यसनं यत्, किं बहुना?, सर्वेषु च 'भूतेषु' प्राणिषु 'समताभावः' समशत्रुमित्रता या तत् सामायिकम्, उक्तं च–" यः समः सर्वभूतेषु, स्थावरेषु त्रसेषु च । तस्य सामायिकं भवति (जातं), केवलिना प्रभाषित ॥ १ ॥ " मिति गाथार्थः ॥ भेदद्वारमाह–

सम्मत्त सुयं तह देसविरई निविहं गिहीण सामइयं । इत्तरियमावकहियं अहवा दुविहं तयं नेयं ॥९३॥

सम्यक्त्वसामायिकं श्रुतसामायिकं देशविरतिसामायिकं, सामायिकशब्दः प्रत्येकमभिसम्बध्यते, इति त्रिविधं, अनेन प्रकारेण 'गृहस्थानां' श्रावकाणां सामायिकं, सम्यग्दर्शनादेरपि समभावरूपत्वाद्यथावस्थितश्रद्धानज्ञानप्रतिपादनात्, इत्वरयावत्-

कथिकमंदेन द्विविधं, तत्र इत्वरं कृतकालावधिना यावत् साधून् पर्युपासे नियमं वा, यावत्कथिकमुपसर्गं प्राप्तः सामायिकं करोति
त्रियमाणेनापि न मया सावद्यमासेवनीयमिति, उपसर्गकारिण्यपि न क्रोधवशगेन भाव्यमिति गाथार्थः ॥ यथा जायते द्वारमाह-
**कम्मक्खओवसमेणं कयसामइओ जइव्व सो सम्मं । इय लाभदंसणेणं पुणो पुणो कुणइ सामइयं ॥ २४ ॥**
कर्मक्षयोपशमेन-द्वितीयकषायावरणक्षयेण, कृतसामायिकः यतिवच्चोपमीयते, न तु यतिरेव, अनुमतेरप्रतिषेधादनुबन्धा-
भावाच्च इति, लाभदर्शनेन-फललाभेन 'पुनः २' वारं २ 'करोति' विदधाति सामायिकं, यावत् साधून् पर्युपासे
इत्यादिदर्शनात्, उक्तं च-" चेइहरसाहुगिहमाइएसु सामाइयं समो कुज्जा । पणिवायाणंतर साहु वंदिउं कुणइ सामइयं ॥ १ ॥
तथा चागमः-" सो उवासओ दुविहो-इड्ढिपत्तो अणिड्ढिपत्तो य, जो सो इड्ढिपत्तो सो गओ साहुसमीवे करेइ, जो पुण
अणिड्ढिपत्तो सो घराओ चेव सामाइयं काऊण पंचसमिइओ तिगुत्तो जहा साहू तहा आगच्छइ, साहुसमीवे पत्तो पुणोऽवि
सामाइयं करेइ, इरियावहियाइ पडिक्कमेज्जा, जइ चेइआइं अत्थि ता पढमं चेइआइं वंदइ, पच्छा पढइ सुणइ वा " तथा
अन्यत्राप्युक्तम्-" इह पंचविधाचारातिचारविशुद्ध्यर्थं श्रावकः प्रतिक्रमणं करोति, तत्र चायं विधिः-प्रथमं साध्वादिसमीपे
मुखवस्त्रिकां प्रत्युपेक्ष्य विधिना सामायिकं करोतीत्यादि, सामाइयं पारेऊण नियघाओ जाव वसहीओ तं करणं वेइज्जइ उयाहु
नोमिरइ सव्वं इत्यादि, " तथा नयविभागेनापि किंचिल्लिख्यते, तत्र नैगमनयमतं-यदैव गुरुणा उद्दिष्टं यथा सामायि-
कसूत्रं पठ तदैव सामायिकवान् लभ्यते, संग्रहव्यवहारमतं गुर्वन्तिके सामायिकार्थं उपविष्टस्य सामायिकं, ऋजुसूत्रमतं तु
सामायिकगाथां पठतश्चैत्यवन्दनं कुर्वतोऽनुपयुक्तस्यापि सामायिकं चैत्यवन्दनं वा, आसन्नासाधारणकारणत्वात्, शब्दा-

दिमतं तु सामायिकोपयुक्तः समभावस्थितः शब्दक्रियारहितोऽपि सामायिकवान्, मनोज्ञपरिणामयुक्तत्वात्, इति नयवादाश्चित्राः कचिद्विरुद्धा इवाथ च न विरुद्धाः । लौकिकविषयातीताः, तत्त्वज्ञानार्थमधिगम्याः ॥ १ ॥ सर्वनयसमूहं तु जिनमतम्, अलमतिप्रसंगेन, दिग्दर्शनमेतदिति गाथार्थः " सोउं सद्दहिऊण य णाऊण य तं जिणोवएसेणं । तं सव्वनयविसुद्धं सव्वनयसंमयं जं तु ॥१॥ एवं सव्वेवि नया मिच्छद्दिट्ठी सपक्खपडिवद्धा । अन्नोन्ननिस्सिया पुण लहंति सम्मत्तसब्भावं ॥ २ " इत्यादि गाम्भीर्यं दर्शनस्य पर्यालोच्यं ॥ दोषद्वारमाह—

**सामाइयं च पडिवज्जिऊण भज्जंति कम्मदोसेणं । ते कंडरीयसरिसा भमंति संसारकंतारं ॥ ९५ ॥**

सामायिकं तु प्रतिपद्य-समभावप्रतिज्ञां विधाय ततो भंगं कुर्वंति कर्म्मदोषात्-गुरुकर्म्मत्वात् श्रावकाः कण्डरीकवत् 'भ्रमन्ति' पर्यटन्ति 'संसारकन्तारं' भवारण्यमिति गाथार्थः ॥ भावार्थः कथानकगम्यस्त चेदम्—

पुण्डरीकिण्यां नगर्यां पुण्डरीककण्डरीकनामानौ द्वौ भ्रातरौ, अन्यदा सुस्थिताचार्यसमीपे धर्म्मं श्रुत्वा पुण्डरीकः प्रतिबुद्धः कण्डरीकं लघुभ्रातरं राज्ये स्थापयित्वा प्रव्रजामीति सम्प्रधार्य गृहं गतः, उक्तश्च कण्डरीकः, तेनोक्तम्—किमित्यकाण्ड एव राज्यं परित्यजसि ?, तेनोक्तम्-दुर्गतिहेतू राज्यं, कण्डरीकेणोक्तम्-किमहं तवानिष्टः ?, पुण्डरीकेणोक्तम्-त्वमपरिकर्मितशरीरः, तेनोक्तम्-अहमपि तेनैव पित्रा जातोऽवश्यं मया प्रव्रज्या ग्राह्या, ततो वारयतो गृहीता कंडरीकेण प्रव्रज्या, स्थितः पुण्डरीकः, वर्षसहस्रं यावत् पालिता, ततो वसंतमासे कामोत्कोचकैः सहकारैः पुष्पितैः कोकिलशब्दितैः चर्चरिभिर्दीयमानाभिश्चलितं चित्तं, गच्छामि गृह्णामि राज्यम्, एकाक्येवागतः पुण्डरीकिण्यामुद्यानपालकं प्रेषयति, यथा पुण्डरीकाय मदागमनवार्त्तां कथय, यथा तत्र

दर्शनार्थमुद्याने कण्डरीकस्तिष्ठति, कथितं, पृष्टं पुण्डरीकेण—कियन्तः साधवः ?, तेनोक्तम्—एकाकी, चिंतितं पुण्डरीकेण—न शोभनमेतत्कृतं ततः स्तोकपरिवारो गतो यावत्तरुशाखायां पात्रं धृत्वाऽऽत्मना हरितमध्ये पादप्रसारिकया तिष्ठति, ज्ञातोऽभिप्रायः, भणितोऽभ्यन्तरं, उक्तश्च यथा गृहाण राज्यं, " इच्छंतो विसयसुहं रज्जम्मि निवेसिओ नरिंदेणं । एकं ताव छुहालू बीयं पुण पाविरं भोज्जं ॥१॥" ततो राज्यालंकारः गृहीतः कण्डरीकेण, प्रव्रज्यालंकारः पुण्डरीकेण, महत्तमानां कथितं यथा युष्माकं कण्डरीको राजा, गतो राजभवनं, कथितः सर्वेषां वृत्तान्तो, न संमतो भग्नव्रतः, न कश्चित्तद्वचो विधत्ते, स च प्रथमपरीषहपराजितः सूपकाराणामादेशं दत्तवान्—सर्वं भोजनजातं ममाग्रतः प्रगुणं कुरुध्वं, तैरपि तथैव कृतं, भोजनार्थमुपविष्टः, प्रेक्षणकदृष्टान्तेन भोक्तुमारब्धः, प्रतीव भुक्तं, रात्रौ विसूचिका संजाता, अप्रतिजागरितो रौद्रध्यानानुगतो लोकानामुपरि तस्मिन्नेवाह्नि मृतः, सप्तमपृथिव्यां नारक उत्पन्नः, पुण्डरीकस्तस्मिन्नेव दिने सर्वार्थसिद्धाविति ॥ गुणद्वारमाह—

**सिवसग्गपढमकारण सामाइयसंगमं तु काऊण । सागरचंदसुदंसण हेऊय चयंति नो पत्तं ॥ ९६ ॥**

'शिवो' मोक्षः 'स्वर्गः' देवलोकः तयोः कारणं—तयोः प्रधानहेतुः, किं तत् ? '**सामायिकसंगमं**' सामायिकसम्बंधं, तुशब्दः पुनःशब्दार्थे '**कृत्वा**' विधाय '**त्यजंति**' परित्यजंति '**नो प्राप्तं सत्**' लब्धं सत्, दृष्टान्तद्वयं सागरचन्द्रवत् सुदर्शनवच्च '**हेतुतः**' प्रामाण्यादिति गाथार्थः ॥ भावार्थः कथानकादवसेयस्तच्चेदं सागरचन्द्रकथानकम्—

द्वारवत्यां बलभद्रपुत्रः सागरचन्द्रः, स च सर्वेषां यादवकुमाराणां शाम्बादीनामतीव वल्लभः संजातः, तस्मिन्नेवाधिष्ठाने उग्रसेनदुहिता कमलामेला नाम दारिका रूपवती नभःसेनस्य दत्ता, वीवाहदिनं च निरूपितं, इतश्च तस्यामेव द्वारकावत्यां नार-

दपरिव्राजकः वेषधारी ब्रह्मचारी वैक्रियलब्धिमानाकाशगामी सम्यग्दृष्टिश्च, अन्यदा कथंचिन्नभःसेनभवनं गतोऽवज्ञातश्च रुषितो निर्गतः, ततः कमलामेलाकन्यकान्तःपुरे गतः, तयाऽभ्युत्थानासनप्रदानवन्दनादिना बहुमानपुरःसरं पृष्टः—अस्यां नगर्यां कः सुरूपः कुरूपो वा ?, नारदेनोक्तम्—नभःसेनसदृशो नास्ति कुरूपो, विरक्ता, रूपेण सागरचन्द्रः, तया चोक्तम्—कथं मम सागरचन्द्रो भर्ता भविष्यति ?, न जानामीति भणित्वा उत्थितः, सागरचन्द्रभवनं गतोऽभ्युत्थितः, चित्रफलके रूपं दर्शितं कमलामेलासम्बन्धि, ततः पृष्टं सागरचन्द्रेण—किं देव्या विद्याधर्या मानुषस्त्रिया वा एतद् रूपं, नारदेनोक्तं—न शक्यते तस्या रूपं लिखितुं, इदं कौतुकमात्रं, ततो मूर्छितस्तन्मयः कामावस्थां प्राप्तः, तामेव स्तम्भादिष्वपि पश्यति, अत्रान्तरे शांबेनागत्य लोचने पृष्ठतः स्थगिते, ततः सागरचन्द्रेणोक्तं—कमलामेला, शांबेनोक्तं—कमलामेलाऽहं, लब्धचेतनेनोक्तं—सत्यप्रतिज्ञो भव, ततः शांबेन चिन्तितं—कल्पेऽपि नासद्भाषी भूतो, ततः प्रद्युम्नात् प्रज्ञप्तिं विद्यां गृहीत्वा यादवकुमाराणां सागरचन्द्रव्यतिकरं कथयित्वा वीवाहमंगलदिने उद्याने सागरचन्द्रं नीत्वा नभःसेनपार्श्वे विद्यया रूपान्तरं निधाय सुरंगया कमलामपहृत्योद्वाहिता, यावत् नभःसेनश्चतुर्थमण्डलं भ्रमति विद्यारूपस्थिता कमलामेला आराटिं कृत्वा नष्टा, उत्थितः कलकलो, वासुदेवादयः सन्नद्धबद्धकवचा यावदुद्याने आयान्ति तावत् ज्ञापितो वृत्तान्तः शाम्बादिभिः, ततो ज्ञातव्यतिकरेण क्षमापितो नभःसेनसम्बन्धी लोको वासुदेवेन, कालेन गच्छता सागरचन्द्रोऽरिष्टनेमिपार्श्वे गृहीताणुव्रत उद्यानं गत्वा कायोत्सर्गेण सर्वरात्रिकीं प्रतिमां स्थितो, दृष्टो नभःसेनः तं प्रज्वलितकोपः श्मशानांगारात्तस्य मृत्तिकया कृतवेष्टनकेऽग्निमपि प्रक्षिप्तवान, रात्रावविचलितः प्रतिमाया देवभूयं गतः, न समभावाच्चलितः, यत उच्यते—“ धम्ममिणं जाणंता गिहिणोवि दढवया किमुय साहू ? । कमलामेलाहरणे सागरचंदेण

एत्सूत्रमर्थ ॥ २ ॥ " साम्प्रतं सुदर्शनकथानकं—

अन्नाणीवि य गोवो आराहेत्ता मओ नमोकारं । चंपाए सेट्ठिकुले जाओ पत्तो य सामन्नं ॥ १ ॥ कथं ?, चंपायां नगर्यां दधिवाहनो राजा, अभयप्रधाना देवी, अभय (ऋषभ) दासश्रेष्ठी श्रावकः, अर्हद्दासी भार्या, महिषीरक्षपालः सुभगनामा, सोऽन्यदा महीषीर्गृहीत्वाऽटव्यां गतो, यावता पश्यति चारणश्रमणं शीतकाले नदीतीरे निरभ्रे कायोत्सर्गेण स्थितं निरावरणं, विस्मितश्च तेन, कथं रजनीं यापयिष्यति ?, बहुमानपुरस्सरं महिषीसमन्विता रजन्यां तमेव साधुं निरुपश्रान्तं, अतिप्रभाते महिषीर्गृहीत्वा गतो यावद् दृष्टः, ततः पादयोः पतितः उपविष्टश्चासन्ने यावत् सूर्य उद्गतः, ततो "नमो अरहंताणं" मिति भणित्वा उत्पतित आकाशे, ततो महामन्त्रोऽयमिति ज्ञात्वा सुभगेन महिषीरक्षकेण नमस्कारो बहुमानबुद्ध्या गृहीतः पठितुमारब्धो, यावद् गृहमागतः तावत् श्रेष्ठिना निवारितः, विधानेन पठ्यते, तेनोक्तं—तात ! जिनेन्द्र-नाम मोक्तुं न शक्नोमि, मया सर्वकालमेव महामन्त्रः पठितव्यः, श्रेष्ठिना चिंतितं—पुण्यभागेव यस्येदृशी नमस्कारस्योपरि भक्तिः, ततः श्रेष्ठिनोक्तं—एवं भवतु, एष नमस्कारस्तव मंगलं पूज्यः, पठितव्यः, ततो महिषीर्गृहीत्वा गंगातीरे वारक गतस्ताश्चोत्तीर्य गङ्गापरकूले गता दृष्टाश्च तेन, ततो नमस्कारं पठित्वा कृतस्तत्र प्रक्षेपो, जलमध्ये काष्ठमासीत् तेनोदरे विद्धो मृतश्च ऋषभश्रावक-भार्याया अर्हद्दास्या उदरे उत्पन्नः, मासे पंचमे तस्या दोहृदाऽभूदिति, जिनायतने महिमा दृश्यते, कृता च श्रेष्ठिना, कालेन दशस्वपि दिक्षूद्योतं कुर्वाणो दारकः प्रसूतः, नाम च कृतं सुदर्शन इति, यावद् द्वासप्ततिकलाकुशलः, चतुःषष्टिविज्ञानयुक्तश्च, तदा विरक्तकामोऽपि सागरदत्तश्रेष्ठिदारिका मनोरमा नाम रतिसदृशी तां पितृभ्यां वीवाहितः, प्रव्रज्यां गृह्णता श्रेष्ठिना च तस्यैव

बाहुबन्धः कृतः, तत्रव तस्य कपिलब्राह्मणः पुरोहितो मित्रं, भार्या तस्य कपिला, सा च भर्तुः सकाशाद् गुणगणोत्कीर्त्तनं श्रुत्वा अनुरागं गता, तया चैकान्तं विज्ञाय कपिलब्राह्मणशरीरकारणव्याजेन स आह्वायित आगतश्च, तया चोक्तम्—अभ्यन्तरेऽपवरिकायां प्रविश, प्रविष्टे चात्मना सद्भावकथनं च कृतं, सुदर्शनेन चिंतितं—नान्यो निर्गमोपायः, तत उक्तं—पुरुषनेपथ्येन तिष्ठामि नपुंसकः सन्, ततो मुक्तः निर्गतो, अन्यदा राज्ञा उद्यानमहोत्सवः प्रारब्धः सह सुदर्शनकपिलाभ्यां, अभयादेवी कपिला ब्राह्मणी मनोरमा चात्मीययानवाहनारूढाः परिवारसमन्विताश्चलिताः, ततः कपिलाब्राह्मण्या उक्तम्—कैषा देवी पुत्रसमन्विता छत्रचामरयानादिभिर्युक्ता?. अभयदेव्योक्तं—मनोरमा पुत्रसमन्विता सुदर्शनभार्या, तयोक्तं—एष षण्ढकः कथं पुत्रोत्पत्तिः?, तयोक्तं—कथं त्वया ज्ञातं यथैष षण्ढकः?, कपिलाब्राह्मण्या कथित आत्मीयो वृत्तान्तः, तयोक्तं—विचक्षणा त्वम्, एष कामदेवः स्वदारसंतुष्टः, एषा च परपुरुषगन्धमपि नेच्छत्यास्तां परिभोगं, त्व वचिता अनेन, ततस्तयोक्तं—त्वं पण्डिता यद्येनं कामयसे, ततः प्रतिज्ञा कृता मरणात्मिका, ततः पण्डितनाम्नी धात्री, तस्या अभिप्रायः कथितः, तया चोक्तं—दुष्टं कृतं, एष परस्त्रीगंधमपि नेच्छति, ततोऽनिवर्त्तकं निर्बन्धं ज्ञात्वा आश्वासिता, असौ पर्वदिने पौषधं करोति, कायोत्सर्गप्रतिमां च, ततः कामदेवप्रतिमाव्याजेन पण्डितधात्र्या प्रवेशितोऽभयदेव्या अपवरके, तया च भणितोऽनेकैः प्रकारैर्यावत् नेष्टं तद्वचः, मौनमालम्ब्य स्थितः, ततः पूत्कारपूर्वकं ग्राहीतः प्राहरिकैः, राज्ञो दर्शितः, वध्य आज्ञापितो, मनोरमाऽपि एतद् व्यतिकरं ज्ञात्वा देवताऽऽराधनार्थं कायोत्सर्गेण स्थिता, शूलिका देवेन सिंहासनं कृतं, खड्गाभिघातास्त्वाभरणानि, राज्ञः कथितं, स्वयमेव गतो, हस्तिस्कन्धारूढो नगरं प्रवेशितः, पृष्टः सन राज्ञा न किंचित् कथयति, ततोऽभयप्रदानपूर्वकमुक्तं, गृहं गतेन मनोरमया सह गृहीता प्रव्रज्या,

देवी मोद्‌रंगनं कृत्वा मृता, पाटलिपुत्रे व्यंतरी उत्पन्ना श्मशाने, पण्डितधात्री च कृतापराधा गता पाटलिपुत्रे देवदत्तवेश्यां समाश्रित्य स्थिता सुदर्शनगुणोत्कीर्तनं च करोति, सोऽपि गीतार्थः एकल्लविहारी तत्रैव नगरे आगता देवकुलिकायां स्थितो दृष्टः पंडितधात्र्या परिज्ञानश्च कथितो देवदत्ताया यथैष सुदर्शनो भिक्षाव्याजेन गृहमागतो हावभावैः कामोत्कोचकैरुपसर्गयितुमारब्धो न चचाल, ततः श्मशाने नीत्वा मुक्तः, दृष्टः तया भद्रव्यन्तर्या, उपसर्गितो न क्षुभितः, प्रशस्ताऽध्यवसायस्य सप्तमदिने केवलज्ञानमुत्पन्नं, ततो देवैर्महिमा कृतः, व्यन्तरी उपशान्ता, देवदत्ता धात्री पण्डिता च, मोक्षं गतः सुदर्शनोऽपि कालेन, यतः गाथार्थश्चलित इति ॥ यतनाद्वारमाह—

**धम्मज्झाणोवगओ जियकोहाई जिइंदिओ धीरो । सुस्साहु पेसणरओ जयणपरो होइ सत्तीए ॥ ९७ ॥**

'धर्मध्यानोपगतः' आज्ञादिचिन्तनपरः जितक्रोधादिः तथा 'जितेन्द्रियः' स्पर्शादिषु शुभेतरेषु प्रीत्यप्रीतिरहितः 'धीरः' सत्त्वयुक्तो बुद्धियुक्तो वा 'सुसाधुप्रेषणरतः' सुविहितवैयावृत्त्ययुक्तः यतना—अनन्तरोक्ता तन्निष्ठो भवति 'शक्त्या' सामर्थ्येनेति गाथार्थः ॥ अतिचारद्वारमाह—

**मणवइकायाणं पुण दुप्पणिहाणं विवज्जए सड्ढो । सामाइयसइअकरण अणवट्ठिअकरणमइयारो ॥ ९८ ॥**

मनोदुष्प्रणिधानं नाम गृहगतसुकृतदुष्कृतचिन्तनारूपं, उक्तं च—" सामाइयंति काउं घरचिंतं जो य चिंतए सड्ढो । अट्टवसट्टोवगओ निरत्थयं तस्स सामइयं ॥ १ ॥ " वाग्दुष्प्रणिधानं नाम असमंजसासत्यभाषणं, उक्तं च—" कडसामइओ पुव्विं बुद्धीए पेहिऊण भासिज्जा । सइ निरवज्जं वयणं अण्णह सामाइयं न भवे ॥ १ ॥ " कायदुष्प्रणिधानं पुनरप्रत्युपेक्षितापमार्जि-

तादिस्थानकरणं, तथा चोक्तम्–" अणिरिक्खियापमज्जिय थंडिल्ले थाणमाइ सेवंतो। हिंसाऽभावेऽवि न सो कडसामइओ पमायाओ ॥ १ ॥ " ततो विवर्जयेत् श्रावकः, तथा '**सामायिकस्मृत्यकरणं**' सामायिकं कृतमकृतं वा न स्मरति, तथा चागमः– " न सरइ पमायजुत्तो जो सामइयं कया उ कायव्वं। कयमकयं वा तस्स हु कयंपि विफलं तयं नेयं ॥ १ ॥ " अनवस्थितकरणेऽप्यतिचारः, अन्यत्राप्युक्तं–" काऊण तक्खणं चिय पारेइ करेइ वा जहिच्छाए। अणवट्ठियसामइयं अणायराओ न तं सुद्धं ॥ १ ॥ " इति संक्षेपार्थः ॥ भंगद्वारमाह—

**दुप्पणिहाणं काउं न देइ मिच्छुक्कडंति भावेणं। कुणइ य अइप्पसंगं तस्स फुडं होइ भंगोऽत्थ ॥ ९९ ॥**

'**दुष्प्रणिधानं**' मनोदुष्प्रणिधानादि गृहगतसुकृतदुष्कृतचिंतनादि '**कृत्वा**' विधाय न ददाति मिथ्यादुष्कृतं '**भावतः**' संवेगसारम्, आत्मानं दुष्कृतकर्म्मकारिणं न निंदति, " हा दुट्ठु कयं हा दुट्ठु चिंतियं अणुमयंपि हा दुट्ठु। अंतो अंतो डज्झइ झुसिरोव्व दुमो वणदवेण ॥१॥ मित्ति मिउमद्दवत्ते छत्तिय दोसाण छायणे होइ। मित्तिय मेराएँ ठिओ दुत्ति दुगुंछामि अप्पाणं ॥ १ ॥ " '**करोति चातिप्रसंगं**' विदधाति चातिप्रसंगं पुनः पुनरतिचारकरणेन, तस्यैवंभूतस्यातिचारनिरपेक्षस्य '**स्फुटं**' व्यक्तं '**भवति**' जायते '**भङ्गः**' सर्व विनाशः '**अत्र**' सामायिक विषये इति गाथार्थः ॥ भावनाद्वारमाह—

**सव्वं चिय सावज्जं तिविहं तिविहेण वज्जियं जेहिं। जावज्जीवं तेसिं नमामि भत्तीएँ कमकमलं ॥ १०० ॥**

'**सर्वमेव**' सूक्ष्मबादरादिभेदभिन्नं '**सावद्यं**' सपापं '**त्रिविधं त्रिविधेन**' नवकभेदेन '**विवर्जितं**' परित्यक्तं यैः सुसाधुभिः, किं परिमितं कालं ?, नेत्याह–'**यावज्जीवं**' अन्त्योच्छ्वासं यावत् तेषां सुविहितानां '**नमामि**' प्रणोमि

'भक्त्या' बहुमानपुरःसरं 'क्रमकमलं' पादपङ्कजमिति गाथार्थः ॥ उक्तं सामायिकं, नवमेदं देशावकाशिकमाह. तत्रापि प्रथमद्वारमाह—

देसावकासियं पुण संखेवो जत्थ पुव्वगहियस्स । जह वसपन्नगदिट्ठो संखिवई वाइओ कोई ॥ १०१ ॥

'देशावकाशिकं पुनः' देशे अवकाशनं संक्षेपेऽवस्थापनं व्रतानां पूर्वगृहीतानां चतुर्मासादिकालावधिना यथा दृष्टिविषपन्नगस्य विषं 'संक्षिपति वातिकः' स्तोकं करोति 'गारुडिकः' स्थावरजङ्गमनिर्विषीकरणवेत्ता कश्चित्तथाविध इति गाथार्थः ॥ भेदद्वारमाह—

संवच्छराइगहियं पभायसमए पुणोऽवि संखिवइ । राओ तंपि य नियमइ भेएण विसिट्ठतरमेव ॥ १०२ ॥

'संवत्सरादिगृहीतं' पर्युषणादिगृहीतमादिशब्दाच्चतुर्मासादिगृहीतं, प्रभातसमये धर्म्मजागरिकायां पुनरपि संक्षिपति—स्तोकस्तोकदिवसयोग्यं व्रतं गृह्णाति दिक्परिमाणादि, रात्रौ तदपि संक्षिपति व्यवहारादिकं, 'भेदेन' पृथिव्यादिग्रहणविकल्पेन विशिष्टतरमेवेति गाथार्थः ॥ यथा जायते तृतीयद्वारमाह—

एगविहं तिविहेणं सव्ववयाणं करेइ संखेवं । अहवा जहासमाही गंठीनवकारपरिमाणं ॥ १०३ ॥

'एकविधं त्रिविधेन' मनसा वाचा कायेन न करोमि स्वयमित्यादिना प्रकारेण सर्वव्रतानां करोति संक्षेपं, अथवा 'यथासमाधि' समाध्यनतिक्रमेण, वित्तविद्यापात्रताद्यनुसारेण शक्त्यनुलङ्घनेन ग्रन्थिनमस्कारपरिमाणादिना कालमानेनेति गाथार्थः ॥ दोषद्वारमाह—

**जाणंतस्सवि एवं अनिवित्तीपच्चओ बहू बंधो । तहवि न करेइ माणं दिया व राओ पमाएणं ॥ १०४ ॥**

जानानस्याप्येवं यथा अनिवृत्तिप्रत्ययः प्रभूतः कर्म्मबन्धः, तथापि, अप्रत्याख्यानस्य सर्वमुक्तं मूलं पूर्वभवशरीरादिकमपि, तथा चागमः—" बद्धेल्लया य मुक्केल्लया य " इत्यादि, यद्यप्येवं तथापि न करोति ' मानं ' प्रमाणं दिवा रात्रौ वा 'प्रमादेन' आलस्यादिनेति गाथार्थः ॥ गुणद्वारमाह—

**चाउम्मासावहिणा बहुयं गहियं न तस्स संपत्ती । एवं नाउं विहिणा संखेवं कुणइ राईए ॥ १०५ ॥**

चातुर्मासिकावधिना प्रभूतं गृहीतं धनधान्यादि न तस्य—धनधान्यादेः सम्प्राप्तिः, एवं ज्ञात्वा विधिना गुरुसमीपे संक्षेपं करोति रजन्यां, रात्रौ व्यवहारस्याकरणात् प्रत्याख्याते आश्रवनिरोधादिति गाथार्थः ॥ कामदेवोऽत्रोदाहरणम्—

चम्पायां कामदेवः श्रावकः, भद्रा भार्या, तस्य च परिग्रहपरिमाणं वृद्धिप्रयुक्ताः षट् कोटचः षट् कोटयो निधानप्रयुक्ताः प्रविस्तरप्रयुक्ताः षट्, सर्वाः अष्टादश कोटचः, हलशतानि पंच, बोहित्थशतानि पंच, दश गोवर्गाः दशसाहस्रिकाः, एवं च स्थितो विंशतिं वर्षाणि, ततः पौषधशालायां प्रतिमाऽभ्यासं कुर्वतः शक्रप्रशंसायामचलनलक्षणायां देवोऽश्रद्दधानः तस्य क्षोभणायागतः, रात्रौ कायोत्सर्गस्थस्य सर्पगजेन्द्रपिशाचादिरूपेण क्षोभयितुमारब्धो, न चात्मीयसत्त्वाच्चलितः, प्रकटीभूतो देवो, वंदित्वा स्वस्थानं गतः, प्रभाते भगवद्वंदनार्थं गतः, भगवता च रजनीव्यतिकरं पुरस्कृत्य क्षान्तिगुणमङ्गीकृत्य साधुभ्योऽग्रतः प्रशंसितः, ततः श्रावकधर्मं निष्कलंकं प्रतिपाल्य सौधर्मे कल्पेऽरुणाभे विमाने देव उत्पन्नः, तस्माच्च्युतो महाविदेहवर्षे सेत्स्यतीति ॥ यतनाद्वारमाह—

**एगमुहुत्तं दिवसं राई पंचाहमेव पक्खं वा । वयमिह धारेउ दढं जावइयं उस्सहे कालं ॥ १०६ ॥**

एकं मुहूर्त्तं-द्विघटिकालक्षणं दिवसं-चतुःप्रहरप्रमाणं रात्रीं-चतुःप्रहरात्मिकामेव 'पंचाहमेव' पंचाह्निकमेव 'पक्षं वा' पंचदशदिनरूपं वा व्रतमिह नियमं ब्रह्मचर्यादिलक्षणं 'धारयतु दृढं' प्रतिपालयतत्यर्थं यावत्प्रमाणं कालमुत्साहशक्तिः-वीर्योल्लासशक्तिरिति गाथार्थः ॥ अतिचारद्वारमाह—

आणयण पेसणेऽविय पओग तह सद्दरूववाए य। बहिपोग्गलपक्खेवो पंचऽइयारे परिहरेज्जा ॥ १०७ ॥

आनयनमन्यतः ग्रामाद् गवादेः, स्वयं प्रस्थितं ब्रुवते-मदीयो गोः अस्माद् ग्रामाद् आनयनीयः, प्रेष्यप्रयोगः प्रेषणं कर्म्मकरादेः, गृहीतदिक्परिमाणादूर्ध्वं, द्विविधत्रिविधभंगेन, ततो लेखवाहादिकं प्रेषयति, तथा शब्दानुपातः कासितादिना समीपवर्त्तिनं गच्छंतं ज्ञापयति, रूपानुपातः उच्चैः स्थित्वा शरीरसंदर्शनं, बहिः पुद्गलप्रक्षेपश्च निकटवर्त्तिनां सम्बोधनार्थं, उक्तंच—" गृहमहं जिणवरमंदिरं न पडिवज्जिऊण पोसहिओ । बहियापोग्गलखेवेहिं कुणइ सण्णऽण्णलोगस्स ॥१॥ " एतान् पंच अतिचारान् देशावकाशिकविषयान् परिहरेदिति संटंकः इति गाथार्थः । भंगद्वारमाह—

सावज्जाण निवित्तिं दिवहं काऊण तक्खणा चेव । आउट्टियाएँ भंगं निरवेक्खो सव्वहा कुणइ ॥ १०८ ॥

सर्वव्रतानां प्राणातिपातपृथिव्यादीनां निवृत्तिं कृत्वा दिवसं सकलं तत्क्षणादेव 'आकुट्टिकया' 'उपेत्य' 'भंगं' विनाशं निरपेक्षः सर्वथा व्रतातिचारं प्रति 'करोति' निर्वर्त्तयतीति गाथार्थः ॥ भावनाद्वारमाह—

सव्वे य सव्वसंगेहिं वज्जिए साहुणो नमंसिज्जा । सव्वेहिं जेहिं सव्वं सावज्जं सव्वहा चत्तं ॥ १०९ ॥

सर्वान् सर्वसंगैः-मातापित्रादिलक्षणैर्वर्जिता ये हि तान् साधून् नमस्कुर्यादिति संटंकः, सर्वैर्यैः सर्वं सावद्यं 'सर्वथा',

विरइफलं नाऊणं भोगसुहासाउ बहुविहं दुक्खं । साहुसुहकोउएण य पडिपुण्णं पोसहं कुणइ ॥ ११३ ॥

विरतिफलं सुखादि ज्ञात्वा भोगसुखाशातो–भोगेच्छायाः 'बहुविधम्' अनेकप्रकारं 'दुःखम्' असन्तोषादिकं, यथा लाभस्तथा लोभः कपिलब्राह्मणस्येव, 'साधुसुखकौतुकेन च' यतिसुखौत्सुक्येन देवराजाधिकसुखाभिलाषेण च, 'परिपूर्णं' चतुर्विधमपि पौषधमनन्तरोदितं करोतीति गाथार्थः ॥ दोषद्वारमाह—

जे पोसहं तु काउं चइया य परीसहेहिं भज्जंति । नालोएंति य भग्गं भमंति भवसायरे भीमे ॥ १४ ॥

ये केचन गुरुकर्माणः पौषधं चतुर्विधमपि कृत्वा त्याजिताः परीषहैः–क्षुत्पिपासादिपरीषहादिभिः तस्य व्रतस्य भंगं कुर्वन्ति, तथा भग्नं नालोचयन्ति–गुरोरन्तिके न कथयन्ति तं व्रतभंगं ते जीवा भवसागरे–समुद्रे भ्रमन्ति–पर्यटन्तीति गाथार्थः ॥ गुणद्वारमाह—

धीरा य सत्तिमंता पोसहनिरया लहंति परमगइं । दिट्ठंतो इह संखो आणंदो जणमणाणंदो ॥ ११५ ॥

'धीराः' बुद्धियुक्ताः 'शक्तिमन्तः' सामर्थ्यवन्तश्च 'पौषधनिरता' पौषधासक्ताः 'लभंते' प्राप्नुवन्ति 'परमगतिं' स्वर्गापवर्गादिगतिं तस्मिन् भवे भवान्तरे वा, दृष्टान्तोऽत्र शंखः श्रमणोपासकः तथाऽऽनन्दश्रावकश्च, किंभूतः ? 'जनमनआनन्दः' लोकानन्दविधायीति गाथार्थः ॥ भावार्थः कथानकगम्यस्तच्चेदम्—

तेणं कालेणं तेणं समएणं सावत्थी नामं नयरी होत्था, उत्तरपुरच्छिमे दिसिभागे कोट्ठए नामं चेइए होत्था, संखे नाम समणोवासए, उप्पला नाम भारिया, तत्थेव सावत्थीए पोक्खली नाम सावए नीयनामेणं समए, तए णं ते दोवि सावया बहुपरिवारा बहुरिद्धिपत्ताऽभिगयजीवाजीवा उवलद्धपुन्नपावा आसवसंवरनिज्जराकिरियाहिकरणबंधमोक्खकुसला सावगवन्नओ, तेणं

कालेणं० समणे भगवं महावीरे पुव्वाणुपुव्विं चरमाणे गामाणुगामं दूइज्जमाणे सुहंसुहेण विहरमाणे जेणेव सावत्थी नयरी जेणेव कोट्ठए चेइए तेणेव उवागच्छइ उवागच्छित्ता अहारूवं उग्गहं जाव विहरइ, तएणं ते समणोवासया इमीसे कहाए लद्धट्ठा समाणा जेणेव सयाइं गेहाइं तेणेव उवागच्छंति ण्हाया कयबलिकम्मा पुरिसवग्गुरावंदपरिक्खित्ता धवलेणं छत्तेणं धरिज्जमाणेणं सावत्थीनयरीए मज्झंमज्झेणं जेणेव कोट्ठए चेइए जेणेव समणे भयवं महावीरे जाव पचविहेणं अभिगमेणं अभिगच्छंति, तिविहाए पज्जुवासणाए पज्जुवासंति, धम्मकहा भाणियव्वा जह जीवा बुज्झंति मुच्चतीत्यादि, ते समणोवासया धम्मं सोचा निसम्म हट्ठतुट्ठा समणं भयवं महावीरं वंदित्ता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया। तएण संखे समणोवासए सेसए एवं वयासी [नो खलु कप्पए अज्ज अम्हं पोसहसालाए पक्खियं पोसहं पडिजागरमाणाणं विहरित्तए] कप्पइ अज्ज अम्ह विपुल असणं पाणं खाइमं साइमं उवक्खडावेत्ता तं पुण असणपाणखाइमसाइमं आसाएमाणाणं विहरित्तए, तक्खणं पोक्खली समणोवासए संखं समणोवासय एवं वयासी—अच्छह ण तुब्भे सुनिव्वुयवीसत्था अहण्णं विउलं असणपाणखाइमसाइमं उवक्खडावेमि, एवं भणित्ता अप्पणप्पणाइं गिहाइं संवहिया, तए णं संखस्स समणोवासयस्स एयारूवे अब्भत्थिए समुप्पज्जित्था—नो खलु अज्ज अम्ह कप्पइ विउलं असणपाणखाइमसाइमं आसाएमाणाणं विहरित्तए, कप्पइ मे पोसहसालाए एगाणियस्स अबीयस्स उम्मुक्कमणिसुवण्णस्स विहरित्तए, एवं संपेहेइ २ जेणेव सए गेहे तेणेव उवागए, उप्पलं समणोवासियं आउच्छित्ता जेणेव पोसहसाला जावपोसहसालं अणुपविसइ पोसहं करेइ, एगे अबीए विहरइ। इओ य पोक्खलिपभिई समणोवासया मिलिया, नेव संखे समणोवासए आगए, तए णं पोक्खली समणोवासए एवं वयासी—अच्छह णं तुब्भे वीसत्था अहण्णं सद्दावेमि, तए णं पोक्खली जेणेव संखस्स गिहं तेणेव अणुपविट्ठे, तए णं सा उप्पला

समणोवासिया पोक्खलिसमणोवासयं आगच्छंतं पासइ आसणाओ अब्भुट्ठेइ सत्तट्ठ पयाइं अणुगच्छइ वंदति, कहि णु साविए ! संखे समणोवासए?, तए णं सा एवं वयासी—पोसहसालाए, तए णं पोक्खली जेणेव पोसहसाला जेणेव संखसमणोवासए तेणेव उवागए, ईरियाए पडिक्कमइ गमणागमणं आलोएइ २ एवं वयासी—आगच्छह तुब्भे देवाणुप्पिए, तए णं संखे समणोवासए एवं वयासी—नो खलु मे कप्पइ तं विउलं असणपाणखाइमसाइमं आसाइत्तए, कप्पइ मे एगाणियस्स पोसहसालाए पोसहं पडिजागरमाणस्स विहरित्तए। तए णं से पोक्खली संखस्स वयणं सोच्चा निग्गए गिहाउ, जेणेव समणोवासया तेणेव उवागच्छइ,२ एवं वयासी—नो खलु संखे समणोवासए हव्वमागच्छइ, तं छंदेणं तुब्भे विउलं असणपाणखाइमसाइमं आसाएमाणा विहरह जाव विहरंति। तए णं संखस्स समणोवासयस्स पुव्वरत्तावरत्तकालसमयंसि सुदक्खुजागरियं जागरमाणस्स इमे एयारूवे अब्भत्थिए समुप्पज्जित्था—नो खलु मे कप्पइ पभाए समणं० अवंदित्ता पोसहं पारित्तएत्ति, तओ पभाए जाए जाव सावत्थीं नयरीं मज्झंमज्झेणं जेणेव कोट्ठए चेइए जेणेव समणे भयवं महावीरे तेणेव जाव पज्जुवासइ, तेणेव ते समणोवासया पभायसमयंसि ण्हाया कयबलिकम्मा जाव पज्जुवासंति, तए णं संखे समणोवासए समणं० वंदित्ता एवं वयासी—कोहवसट्टे णं भंते! जीवे किं बंधइ? किं चिणइ?, संखा! कोहवसट्टे णं जीवे आउयवज्जाओ सत्त कम्मपयडीओ सिढिलबंधणबद्धाओ धणियबद्धाओ करेइ एवंजावलोहवसट्टेणंति। तए णं ते समणोवासया समणं० वंदित्ता एवं वयासी—किज्जो णं भंते! संखे समणोवासए हीलइ निंदइ गरहइ, तए णं समणे भयवं महावीरे एवं वयासी—मा णं अज्जो संखं समणोवासयं हीलेह निंदह, संखे णं समणोवासए पियधम्मे चेव दढधम्मे चेव सुदक्खुजागरियं जागरिए। तए णं गोयमे एवं वयासी—कइविहा णं भंते! जागरिया पण्णत्ता?, गोयमा! तिविहा पण्णत्ता, तंजहा—बुद्धजागरिया

अबुद्धजागरिया सुदक्खुजागरिया,तए णं ते समणोवासया भीया तत्था तसिया उव्विग्गिया संजायभया संखं समणोवासयं भुज्जो भुज्जो खामंति, एगट्ठा पसिणाइं पुच्छंति अद्धाइया संता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया, भंते !त्ति गोयमे समणं० वंदइ जाव एवं वयासी–संखे णं भंते! समणोवासए मुंडे भविता अगाराओ अणगारियं पव्वइहिइ ? गोयमा ! नो इणट्ठे समट्ठे, संखे णं समणोवासए बहूइं वासाइं समणोवासयपरियागं पाउणित्ता कालं किच्चा सोहम्मे कप्पे देवत्ताए उववज्जिहि, तओ चुओ महाविदेहे वासे सिज्झिहिइ बुज्झिहिइ मुच्चिहिइ सव्वदुक्खाणमंतं काहिइ। विस्तरतो भगवत्याम् । आनन्दकथानकं द्वितीयम्—

वाणियगामे आणंदगाहवइ रिद्धिवण्णणं तस्स। इड्ढिनिहाणपवित्थरच उच उकोडीहि बारस उ ॥ १ ॥ भयवं तत्थागच्छइ, दूइपलासम्मि चेइए वसइ। आणंदो य अणुव्वयगहणं कुणई तहिं सिग्घं ॥ २ ॥ कोल्लागसन्निवेसे तस्स अदूरम्मि तस्स सयणजणो। पोसहसाला तत्थण्णया उ आणंदगमणं तु ॥ ३ ॥ सिवनंदभारियाते सद्धिं भोगा सदारसंतोसं। तहय परिग्गहकोडी बारस हल पंच य सया उ ॥ ४ ॥ सगडसहस्सं बोहित्थमाणं ४०० गोवग्गमाण किसिमाणं। उवभोगुव्वलणं खज्जगाइसागाण परिमाणं ॥ ५ ॥ पनरस वच्छर चिंता कुडुंबभारं च सयणवग्गं च। पुत्ते निक्खिविऊणं नाइकुलं जाइ पडिमट्ठा ॥ ६ ॥ कोल्लाए पडिमाओ समप्पिउं वीसमंमि वरिसंमि। संलेहणमाढवई ओहिन्नाणं च उप्पन्नं ॥ ७ ॥ सोहम्मं हिमवंतं समुद्दमज्झं च लोलुयं नरयं। भयवं तत्थ विहरइ नय सक्कइ तत्थ गंतूणं ॥८॥ भिक्खट्ठाए पविट्ठं गोयमसामिं च भणइ आणंदो। भयवं अणुग्गहेह जेण पवंदामि ते पाए ॥ ९ ॥ तं सोऊणं तत्थेव गोयमो गच्छए तओ सिग्घं। वंदण ओही पुच्छा परिमाणे विप्पडीवत्ती ॥१०॥ आकोएही सो गोयमेण आणंद तह य पडिभणई। किं तुज्झं किं मज्झं गोयम संका तओ जाया ॥ ११ ॥ भयवं गंतु पुच्छइ

भयरं पडिमणइ गुज्झ अइयारो । पच्छा गंतुं आणंदखामणं गोयमो कुणइ ॥ १२ ॥ सव्वाउं पालित्ता वीसं वासाइं अणसणं
काउं । अरुणाभे चउपल्लिओ महाविदेहम्मि सिज्झिहिइ ॥ १३ ॥ कथानकं सविस्तरमुपासकदशांगे सप्तमे । तथा च-आणंद
कामदेवो चुल्लणिपिया तइय चउत्थ सुरदेवो । चुल्लसय कुण्डगोलिय सरालपुत्ते महासयए ॥ १ ॥ नंदिणी विय सालईपिया
दस अज्झयणा उवासगदसाणं । तत्थ य सावयचरिया पडिमा य दसाणुयक्खंवे ॥ २ ॥ "अधुना यतनामाह—

अहसत्तीए उ तवं करेइ पहाणाइ परिमियं चेव । दियबंभयार रत्तिं मियं च वावार संखेवे ॥ ११६ ॥

'यथाशक्त्या' शक्त्यनुल्लंघनेन ननु 'तपः' आचाम्लादिरूपं 'करोति' विदधाति, 'स्नानादि परिमितं च' स्नानविलेपनता-
म्बूलादि परिमितं-परिमितप्रमाणेन यतनया च भूमिनिरीक्षणपरिमितोदकेन च, तथा दिवा ब्रह्मचारी रात्रौ मितं च महरादिमानेन
गण्डपीडापूतिनिष्कासनदृष्टान्तेन पौषधरहितोऽपि, तथा व्यापारस्यापि संक्षेपं करोति, परिशितमिति गाथार्थः॥ पौषधातिचारमाह—

संथारे थंडिले विय अप्पडिलेहाऽपमज्जिए दो दो । संमं च अणणुपालणमइयारे पंच वज्जिज्जा ॥ ११७ ॥

'संथारे' त्ति शय्यासंस्तारकौ गृहीतौ, शय्या-वसतिः संस्तारको-यत्र सुप्यते अथवा शय्या-सर्वाङ्गिकी, संस्तार-
कोऽर्द्धतृतीयहस्तमात्रः 'थंडिले' त्ति उच्चारप्रस्रवणभूमिः, उपलक्षणमेतत् स्वाध्यायभूम्यादेः, तत्र प्रत्युपेक्षणं दृष्ट्याऽवलोकनं
प्रमार्जनं दण्डापुंछनवस्त्रान्तादिना तयोरकरणं न्यूनाधिककरणं वा तेनाप्यतिचारः, एते चत्वारोऽतिचाराः,स्थण्डिलभूमीनां संख्या
सप्तसं चतुर्विंशत्यधिकं, ततो " वारस वारस तिन्नि य काइय उच्चारकालभूमीओ । अंतो बाहिं च अहियासि अणहियासी य
पडिलेहे ॥ १ ॥ " सम्मं अणणुपालणं च पंचमोऽतिचारः, तत्र अननुपालनं कथं ?, पौषधिकश्चिन्तयति प्रभाते अशनपाना-

दिविषयमिदं करिष्यामि, शरीरसत्कारविषये स्नानविलेपनादि चिन्तयति, व्यापारेऽपीदं व्यवहारादिकं करिष्याम्येवं ब्रह्मचर्येऽपीति गाथार्थः ॥ भङ्गद्वारमाह—

उवसग्गपरीसहदारुणेहिं कम्मोदएहिं नासिज्जा । रयणं व पोसहं खलु अइक्कमाईहिं दोसेहिं ॥ ११८ ॥

उपसर्गा दिव्यादयः षोडश, क्षुदादयो द्वाविंशतिः परीषहाः, तैर्दारुणैः—रौद्रैः चुल्लनिपिता इव कर्मोदयैर्वा भ्रंशं कुर्यात् पौषधस्य, रत्नमिव, यथा प्रमत्तस्य रत्नं भ्रश्यति एवमिदमप्यतिक्रमादिभिर्दोषैः भ्रंशसमन्वितं भवतीति गाथार्थः ॥ भावनाद्वारमाह—

उग्गं तप्पंति तवं सरीरसक्कारवज्जिया निच्चं । निव्वावारा तह बंभयारि जइणो नमंसामि ॥ ११९ ॥

उग्रं 'तपः' मासोपवासादि 'तप्यंति' कुर्वंति, तथा 'शरीरसत्कारविवर्जिता नित्यं' शरीरसत्कारपरिहारिणः रागबुद्ध्या यावन्नित्यं—यावज्जीवं 'निर्व्यापाराः' सावद्यव्यापारपरिहारिणः, तथा 'ब्रह्मचारिणः' अष्टादशभेदभिन्नस्य नवगुप्तिसनाथस्य ब्रह्मचर्यस्यानुष्ठायिनो 'यतयः' साधवो नमस्यामि इति गाथार्थः ॥ उक्तं तृतीयं शिक्षाव्रतं, साम्प्रतं अतिथिसंविभागाख्यमाह, तत्रापि प्रथमद्वारम्—

साहूणं जं दाणं नायागयकप्पमण्णपाणाणं । सो अतिहिसंविभागो सद्धासक्कारकमसहिओ ॥ १२० ॥

'साधूनां' ज्ञानदर्शनचारित्रमोक्षसाधनानां तेषां यद्दानमनुग्रहबुद्ध्या, यतो दशविधं दानं पठ्यते क्वचित्—"आदानगर्वसंग्रहभयानुकंपाऽथ लज्जया दानम् । उपकृतमधर्म्मदानं धर्म्मार्थं चाभयार्थं च ॥१॥" तच्च न्यायागतं न्यायोपात्तं, न त्वपहृत्य दानं, 'कल्प्यम्' आधाकर्म्मादिदोषरहितं "यत् स्वयमदुःखितं स्यात् न च परदुःखे निमित्तभूतमपि । केवलमुपग्रहकरं धर्मकृते

तद् भवेरेयम् ॥ १ ॥ 'अशनपानादि' आदिशब्दात् वस्त्रपात्रऔषधशय्यादि, अतिथिसंविभागः, ज्ञानादिसमन्वितो भोजनकालोपस्थायी अतिथिर्भण्यते, तस्य संविभा०संविभागकरणं पुरःपश्चात्कर्म्मादिदोषरहितपिण्डप्रदानलक्षणमतिथिसंविभागः 'श्रद्धासत्कारक्रमसहितः' श्रद्धा भक्तिबहुमानरूपः सत्कारः–पादप्रमार्जनासनपादवन्दनादिकः क्रमः–यद्यत्र प्रथमं ओदनादि दीयते 'ततः सहितः' तदुक्त इति गाथार्थः " पइदिणं भत्तपाणेणं ओसहेण तहेवय ।'अणुग्गहेह मे भयवं !, सावओ उ निमंतए ॥ १ ॥ गिहमागयस्स साहुस्स आसणं नियमसो उ दायव्वं । वंदिय सयं च वियरइ अहवा अण्णं दवावेइ ॥२॥ ठियओ चिट्ठए ताव, जाव मनं पयच्छियं । पुणोऽवि वंदणं काउं, भुंजई उ सयं गिही ॥ ३ ॥ एन्तस्सणुगच्छणया ठियस्स, तह पज्जुवासणा भणिया । गच्छन्ताणुवयणं, एसो सुस्सूसणाविणओ ॥ ४ ॥ " भेदद्वारमाह—

असणं पाणं तह वत्थपत्तभेसज्जसेज्जसंथारे । अतिहीण संविभागे भेया अह एवमाईया ॥ १२१ ॥

अशनं–मोदकादि पानं–द्राक्षाक्षीरपानावश्रावणादि वस्त्रं–कर्पासादिसंबंधि पात्रं–अलाब्वादि, भेषजं–त्रिकटुकादि, शय्या–वसतिः संस्तारकः–कंबल्यादिलक्षणः अतिथीनां संविभागे,–तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना । अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ॥ १ ॥ सर्वारम्भनिवृत्तस्तु, स्वाध्यायध्यानतत्परः । विरतः सर्वपापेभ्यो, दान्तात्मा ह्यतिथिर्भवेत् ॥ २ ॥ संयमगुणयुक्तेभ्यः षड्जीवनिकायरक्षणपरेभ्यः । पंचेन्द्रियविरतेभ्यः पंचसु समितिषु समितेभ्यः ॥ ३ ॥ समतृणमणिमुक्तेभ्यो यद् दानं दीयते सुपात्रेभ्यः । अक्षयमतुलमनन्तं तद् दानं भवति धर्म्माय ॥ ४ ॥ उक्तं च–"विधिविशेषात् द्रव्यविशेषात् दातृविशेषात् पात्रविशेषाच्च फलविशेषः " इतरथा दंसणनाणचरित्तं तत्र विणयं जत्थ जत्थियं जाणे । जिणपन्नत्तं भत्तीएँ पूयए तं तहा-

